तद्द्वयं रूपकं प्रोक्तं मुनिभिर्ब्रह्मवादिभिः ।
माषषोड़शमानन्तु सुवर्णमिति कथ्यते ॥
पलं सुवर्णाश्चत्वारस्तच्चत्वारि ध्रुवोभवेत् ।
चत्वारिंशद्ध्रुवाणान्तु भारइत्युच्यते बुधैः ॥
सुवर्णेन यथाक्रीतं रजतं धर्म्ममागतः ।
यावान् रजतराशिश्च तद्राजतमुदाहृतम् ॥
हत्वा ब्रह्मस्वमज्ञात्वा द्वादशाब्दन्तु पूर्व्ववत् ।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतञ्चरेत् ॥
गुरूणां चैव कर्त्तृणां धर्म्मिष्ठानां तथैवच ।
श्रोत्रियाणां द्विजानान्तु हृत्वा हेम कथं भवेत् ॥
दग्धात्मदेहो देहे च सम्पूर्णं तर्पयेद्घृतम् ।
कारीषा(१)च्छादितो दग्धःस्तेयदोषात् प्रमुच्यते ॥

ब्रह्माण्डपुराणे ।

अज्ञानाद्ब्राह्मणं हत्वा ब्रह्मस्वप्रणयादिह ।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतं चरेत् ॥
दग्ध्वा(२)त्मदेहं देहे च संपूर्णं लेपयेद् घृतम् ।
कारीषभारतोदग्धः स्तेयपापात् प्रमुच्यते ॥

---

(—) अनयोरेखयोरन्तर्गतः पाठः लेखितपुस्तके नोपलभ्यते ।
(१) कारीषभारतो दग्ध इति क्रीतपुस्तके पाठः ।
(—) अयं पाठः क्रीतपुस्तके नोपलभ्यते ॥
(२) गत्वात्मदेहइति लेखितपुस्तकपाठः ।

यद्वांसे मुसलं धृत्वा विकीर्य्यात्मशिरोरुहान् ।
गत्वा राजानमाचक्षेत् तं हन्यान्मस्तके सकृत् ॥
मृतः शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते ।

तदाह आपस्तम्बः

"स्तेनः प्रकीर्णकेशः अंसे मुसलमाधाय राजानं गत्वा कर्म्माचक्षीत । तेन एनं हन्यात् बधे मोक्षः ।" (आ सू १-९-२५-४)

अल्पसुवर्णापहारप्रायश्चित्तमाह—

गुरूणां यज्ञकर्त्तृणां धर्म्मिष्ठानां तथैवच ।
श्रोत्रियाणां द्विजानान्तु हृत्वा हेम कथं भवेत् ॥
ब्रह्मस्वं यस्तु हृत्वा च पश्चात्तापमवाप्य च ।
पुनर्धृत्वा[1] तु विप्रेभ्यः प्रायश्चित्तविधिः कथम् ॥
तत्र सान्तपनं कृत्वा द्वादशाहोपवासतः ।
शुद्धिमाप्नोति विप्रेन्द्राअन्यथा पतितोभवेत् ॥
त्रसरेणुसमं हेम हृत्वा कुर्य्यात् समाहितम् ।
प्राणायामद्वयं सम्यक् तेन शुध्यति वत्सरात् ॥
प्राणायामद्वयं कृत्वा हृत्वा सर्षप[2]मात्रकम् ।
प्राणायामाश्च चत्वारो राजसर्षपमानतः ॥
गौरसर्षप[3]मानन्तु हृत्वा स्वर्णं विचक्षणैः ।
स्नात्वा च विधिवत् कार्य्यं गायत्राष्टसहस्रकम् ॥

---

(१) पुनर्हृत्वा तु विप्रेभ्यइति कीतपुस्तकपाठः ॥
(२) सर्षपमानकमिति लेखितपुस्तकपाठः ।
(३) गौरसर्षपमाणन्तु इति लेखितपुस्तकपाठः ॥

यवमात्रसुवर्णस्य स्तेयशुद्ध्यै जपेद्द्विजः ।
आसायं प्रातरारभ्य गायत्रीं वेदमातरम् ॥
हेम्नः कृष्णलमात्रस्य हृत्वा सान्तपनं चरेत् ।
माषत्रयेण हेम्नस्तु प्रायश्चित्तन्तु कथ्यते ॥
गोमूत्रपक्वयवभुग् देवार्चनपरायणः ।
मासत्रयेण शुद्धः स्यान्नारायणपरायणः ॥
माषमात्रसुवर्णस्य स्तेयं कृत्वा प्रमादतः ।
जपेद्वै लक्षगायत्रीमन्यथा दोषमश्नुते ॥
निष्कमात्रसुवर्णस्य हरणे विप्रसत्तमाः ।
ब्रह्महत्याव्रतं कृत्वा षड़ब्दं शुद्धिमाप्नुयात् ॥
किञ्चिन्न्यूनं सुवर्णस्य स्तेयं मुनिवरोत्तमाः ॥
गोमूत्रपक्वयवभुग् अब्देनैकेन शुद्ध्यति ।
सम्पूर्णस्य सुवर्णस्य स्तेयं कृत्वा मुनीश्वराः ॥
ब्रह्महत्याव्रतं कुर्य्याद्द्वादशाब्दं समाहितः ।
रत्नासनमनुष्यस्त्रीभूमिधेन्वादिकेषु च ॥
सुवर्णसदृशेष्वेषु प्रायश्चित्तार्द्धमुच्यते ।

मार्कण्डेय पुराणे—

विप्रस्वहरणे क्षत्रियादीनां प्रायश्चित्तं विशिनष्टि ॥

(१) कुर्य्यादिति क्रीतपुस्तके पाठः ।

(२) शब्देकेनैव शुध्यति इति लेखितपुस्तके शरेकेनैव शुध्यति इति क्रीत पुस्तके पाठः समुपलभ्यते ।

(३) प्रायश्चित्तार्धमुच्यते इति क्रीतलेखितपुस्तकयोः पाठः ।

( स्तेयंकृत्वा सुरां पीत्वा राजा योधर्म्मवत्सलः )
विप्रस्वहरणे राजा स्वर्णमात्रमथाधिकम् ।
मृत्वा नरकमाप्नोति ब्रह्मर्हेति वदन् द्विजाः ॥
पश्चात्तापसमायुक्तो ब्रह्महत्याव्रतं चरेत् ।
तेभ्यश्चदत्त्वा तद्देम पश्चाच्चान्द्रायणद्वयम् ॥
कृत्वा शुद्धिमवाप्नोति नान्यथा जनवल्लभ ।

कूर्म्मपुराणे—

अज्ञानाद्ब्राह्मणो हृत्वा विप्राणां स्वर्णमुत्तमम् ॥
गुरूणां यज्ञकर्त्तॄणां धर्म्मिष्ठानां तथैवच ।
श्रोत्रियाणां द्विजानान्तु विधवानां विशेषतः[१] ॥
पूर्व्ववद्[२] घृतलिप्ताङ्गः कुर्व्वन् सूर्य्यावलोकनम् ।
कारीषाच्छादितो दग्धः स्तेयपापात्प्रमुच्यते ॥

लिङ्गपुराणे—

ब्रह्मस्वं क्षत्रियोहृत्वा अश्वमेधेन शुध्यति ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा गोसमं तथा[३] ॥
ब्रह्मस्वं क्षत्रियो हृत्वा पश्चात्तापमवाप्यच ।
पुनर्दत्त्वा तु विप्रेभ्यः प्रायश्चित्तविधिः कथम् ॥

(—) अयं पाठः क्रीतपुस्तके नोपलब्धः ।
(१) वैष्णवानां विशेषतः इति क्रीतपुस्तके पाठः ।
(२) पूर्व्वाह्णतवसुल्यागं इति क्रीतपुस्तके पाठः ।
(३) चरेत् इति लेखितपुस्तके पाठः ।

तत्र सान्तपनं कृत्वा द्वादशाहोपवासतः।
शुद्धिमाप्नोति विप्रेन्द्रा अन्यथा पतितोभवेत्।

पुनरपि राज्ञां स्तेयप्रकारमाह—

शिवरहस्ये—

अन्यायाद्विप्रग्रामेषु अनाथेभ्योधनं च यत्।
अदण्ड्येभ्योयथा वित्तं तत् स्तेयं भूभुजामिह॥
तदपि स्तेयमित्युक्तं पूर्व्ववच्छुद्धिमाप्नुयात्।
सुरामपि तथा राजा पीत्वा ज्ञानात् क्वचिद्द्विजाः॥
अग्निदग्धां सुरांपीत्वा राजा मृत्वा ततः शुचिः।
तथापि विप्रमुख्यानां ह्ययुतं धेनुमाचरेत्॥
स्तेयं कृत्वा सुरांपीत्वा मृत्वा राजा विशुध्यति।
द्विजेभ्योह्ययुतं धेनुमिति यत्तदसाम्प्रतम्॥

वर्णचतुष्टयानां नारीणां मद्यपानसम्भवे, न मरणान्तम्। त्यागएव परम्। न पोषणो[1]पायः। क्षत्रिय[2]शूद्रस्त्रीणां केचिद्वधमिच्छन्ति। सुवर्णस्तेयेऽपि एवमेव वेदितव्यम्।

तदाह कात्यायनः—

विप्रादीनां तु नारीणां स्तेयं वा पापमेव वा।
सम्भवेद् यदि दैवेन नेच्छन्ति मरणं बुधाः॥

(१) न पोषणेऽपाय इति क्रीतपुस्तके पाठः।
(२) क्षत्रियशूद्राणामिति क्रीतपुस्तके पाठः।

न त्याज्यास्तु स्त्रियः काश्चिन्नोपोष्या वेसुभिः किल ।
क्षत्रियादेर्वधः प्रोक्तो विप्राणां गर्हितं स्मृतम् ॥

लिङ्गपुराणे—

सुरापानं वणिक् कृत्वा सुवर्णं वा द्विजन्मनाम् ।
क्षत्रवच्छुद्धिमाप्नोति शूद्रो मौसल्यमर्हति ॥

स्कन्दपुराणे—

सुरां पीत्वा सुवर्णं वा हृत्वा यदि वणिक्पतिः ।
राजवच्छुद्धिमाप्नोति द्व्ययुतं वा गवां चरेत् ॥

नागरखण्डे—

ऊरुजस्तु सुरां पीत्वा हृत्वा स्वर्णं द्विजन्मनाम् ।
क्षत्रवद्देहशुद्धिः स्याद् अन्यथा द्व्ययुतं गवाम् ॥
तच्छूद्रस्तु सुरां पीत्वा हृत्वा हेम द्विजन्मनाम् ।
राजदण्डः स्वधर्म्मेण मुसलेन हतः शुचिः ॥

स्कन्दपुराणे—

पादजस्तु यदा हृत्वा सुवर्णं पूर्व्वजन्मनाम् ।
सुरां पीत्वा मत्तजन्नात्वा मौसल्यं वधमर्हति ॥

(१) क्षत्रियवच्छुद्धिमाप्नोति इति कीतलेखितपुस्तकयोः पाठः ।
(२) मौसल्यवध इष्यते इति कीतलेखितपुस्तकयोः पाठः ।

विष्णु*धर्म्मोत्तरे—

अद्विजो [1]हेमहारी यः सुरापायी[2] द्विजन्मनाम्।
तत्स्त्रीणां त्यागएव स्यात् सोऽपि मौसल्य मर्हति॥

राजविजये—

पादजो यदि मोहाद्वा सुरां पीत्वा द्विजन्मनाम्।
हृत्वा हेम कथं तस्य राज्ञा[3] मौसल्यमिष्यते॥
तत्स्त्रीणां त्यागएव स्यात् ध्वजो वा मुनिचोदितः।

इति हेमाद्रौ क्षत्रियादीनां विप्रस्वहरणे
प्रायश्चित्तम्।

---

* विष्णुपुराणे इति क्रीतपुस्तके पाठः।
(१) हेमहृत्वा य इति क्रीतलेखितपुस्तकपाठः।
(२) सुरां पीत्वा इति क्रीतपुस्तके पाठः।
(३) राजा मौसल्यमिष्यते इति क्रीतपुस्तकपाठः।

## अथ रजतादिस्तेयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

सुवर्णेन प्रमाणेन ज्ञात्वा यद्राजतं भवेत् ।
तावद्धृत्वा द्विजो यस्तु स्तेयी इत्युच्यते बुधैः ॥

स्कान्दपुराणे—

राजतं येन तं[1] वित्तं पूर्व्वमानेन धर्म्मतः ।
तद्धृत्वा मुखजः सम्यग् अज्ञानाद्रा[2]जनन्दन ॥
स्तेयी इत्युच्यते सद्भिः प्रायश्चित्ती भवेद् द्विजः ।

चतुर्व्विंशतिमते

हरेद्रजतमज्ञानात्[3] पूर्व्वजो यदि दैवतः ।
स कृत्वा पूर्व्ववद्राजन् शुद्धिमाप्नोति निश्चितम् ।

महानारदीये

सुवर्णमानानन्यस्मिन् रजतस्तेयकर्म्मणि ।
कुर्य्यात् सान्तपनं सम्यग् अन्यथा पतितो भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्धं निष्कचतुष्टयात् ।
हृत्वेद्रजतं[4] विद्वान् कुर्य्याच्चान्द्रायणं द्विजः ॥
दशादिशतनिष्कान्तरजतस्तेयकर्म्मणि ।
चान्द्रायणद्वयं प्रोक्तं तत्पापपरिशोधकम् ॥

---

(१) येन यत् क्रीतमिति लेखितपुस्तके पाठः ।

(२) राजतं हरेदिति क्रीतपुस्तके पाठः ॥

(३) अज्ञानाद्राजतं हृत्वा इति क्रीतलेखितपुस्तकयोः पाठः ।

(४) हृत्वा चेद्रजतं इति क्रीतलेखितपुस्तकयोः पाठः ।

शतादूर्द्ध्वं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम् ।
सहस्रादधिके स्तेये ब्रह्महत्याव्रतं चरेत् ॥

स्कन्दपुराणे —

सुवर्णादधिकस्तेये रजतस्य विशांपते ।
कुर्य्यात् सान्तपनं सम्यक् अन्यथा दोषभाग् भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्ध्वं निष्कचतुष्टयात् ।

स्कन्दपुराणे—

सुवर्णादधिकस्तेये रजतस्य विशांपते ।
कुर्य्यात् सान्तपनं सम्यक् अन्यथा दोषभाग् भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्ध्वं निष्कचतुष्टयात् ।
हृत्वा चेद्रजतं विद्वान् कुर्य्याच्चान्द्रायणं द्विजः[1] ॥
शतादूर्द्ध्वं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम् ।
सहस्रादधिकस्तेये ब्रह्महत्याव्रतं चरेत् ॥

क्षत्रियविशां रजतस्तेये विप्रप्रायश्चित्ताद्द्विगुणं वेदितव्यम् । शूद्रस्य साम्यमेव । तत्तत्स्त्रीणां रजतादिस्तेयसम्भवे [2]त्यागः पूर्व्ववन्न मरणादि ।

इति हेमाद्रौ रजतस्तेयप्रायश्चित्तम् ।

---

(१) शुभमिति लेखितपुस्तके पाठः ।

(२) त्याज्या इति क्वचित् लेखितपुस्तकयोः पाठः ।

## अथ ताम्रस्तेयप्रायश्चित्तमाह।

[1]स्कन्दपुराणे—

(हृत्वा विप्रः [2]पलशतं ताम्रं पारक्यमादरात्।
स्तेयी इत्युच्यते सद्भिर्न सम्भाष्यः कदाचन॥
पलप्रमाणं पूर्व्वमुक्तं)

मुखजो लोभतस्ताम्रं पारक्यं वै शतं पलम्।
स्तेयी महद्भिर्गदितस्तस्य नास्तीह निष्कृतिः॥

गरुड़पुराणे—

अनाथानाञ्च नारीणां विधवानां द्विजन्मनाम्।
गुरूणां कर्म्मनिष्ठानां साधूनां ताम्रमादरात्
स्तेयेन वा वलात्कारात् विप्रो हृत्वा शतं पलम्।
न तस्य निष्कृतिर्नास्ति र्मरणान्तवधादिह॥
पलद्वये पञ्चगव्यं पीत्वा शुद्धिमवाप्नुयात्।
प्राजापत्यं पञ्चपले तप्तं दशपले स्मृतम्[3]॥
त्रिंशत्पलेतु चान्द्रं स्यात् पञ्चाशत्त्तत्रयं स्मृतम्।
ताम्रे षष्टिपले प्रोक्तं मासं कृत्वाघमर्षणम्॥
कण्ठदघ्नजले स्थित्वा शुद्धिमाप्नोति पूर्व्वजः।
ताम्रे शतपले राजन् स्तेयं कृत्वा तु पूर्व्वजः॥

---

(१) लिङ्गपुराणे इति लेखितपुस्तके पाठः।
(२) अयं पाठः क्रीतपुस्तके नोपलभ्यते।
(२) पञ्चशतमिति लेखितपुस्तके पाठः।
(३) प्राजापत्यं पञ्चगव्य तप्तं दशपले स्मृतम्। इति क्रीतपुस्तके पाठः।

त्रिः परिक्रमणं[1] कुर्य्याद् [2]भुवश्चान्द्रं ततः परम्।
हृत्वा शतपलं ताम्रं स्वर्णस्तेयसमं विदुः॥

शतपलताम्रस्तेयात् द्विजः सुवर्णस्तेयवत् प्रायश्चित्तं कुर्य्यात्। नात्र मरणान्तं प्रायश्चित्तम्। सुवर्णस्तेयसममित्युक्तम् अतो न मरणान्तप्रायश्चित्तम्। अयुतधेनुदानादिकमेव [3]क्षत्रियादिस्तेय प्रायश्चित्तम्। एवं न सुवर्णस्तेयादिवत्।

इति हेमाद्रिविरचिते धर्मशास्त्रे प्रायश्चित्ताध्याये
ताम्रस्तेयप्रायश्चित्तम्।

---

(१) कृत्वा इति क्रीतपुस्तके पाठः।
(२) भुक्त्वा इति क्रीतपुस्तके पाठः।
(३) क्षत्रियादेस्तेयप्रायश्चित्तमिति क्रीतपुस्तके पाठः।

## अथ कांस्यस्तेयप्रायश्चित्तमाह ।

(कूर्म्मपुराणे—

[1]कांस्यं यत्पापसम्भूतं पारक्यं यदि लोभतः ।
स्तेयं कृत्वा द्विजोयस्तु स पापफलमश्नुते ॥

लिङ्गपुराणे—

कांस्यस्तेयी महापापी रौरवं नरकं व्रजेत् ।
पश्चाद्भवति पापात्मा कारुको जायते भुवि ॥

महाभारते—

कांस्यं हृत्वाद्विजो लोभात् पारक्यं द्विजहेतुकम् ।
महान्तं नरकं गत्वा हीनवर्णः प्रजायते ॥

चतुर्व्विंशतिमते—

कांस्यपित्तलमुख्येषु आयमान्तेषु पञ्चसु ।
सहस्रनिष्कमाने तु पारक्यं परिकीर्त्तितम् ॥
प्रायश्चित्तन्तु लौहानां स्तेये रजतवत्स्मृतम् ॥

कांस्यपित्तलस्तेये वर्णत्रयस्य रजतस्तेयवत् प्रायश्चित्तम् पलसंख्यया

---

(—) अयं पाठः क्रीतकाशीपुस्तकयोर्न दृश्यते ।

(1) काशीपुस्तक क्रीतपुस्तकयोः ' स्कन्दपुराणे ।

मुखजो लोभसन्तप्तः पारक्यं वै पलं ततः ।
स्तेयं कृत्वा द्विजोयस्तु सपापफलमश्नुते

इत्यधिकपाठः समुपलभ्यते ।

वेदितव्यम् । न निष्कादिप्रमाणम् । शूद्रस्य [1]राजत[2]लघुगुरुक्रमेण अङ्गुलिच्छेदादिकं कारयितव्यं न मौसल्यम् । द्रव्यस्याल्पत्वात् । तत्स्त्रीणामेवमेव सम्भवे प्रायश्चित्तं करणीयम् ।

इति हेमाद्रौ प्रायश्चित्ताध्याये कांस्यस्तेयादि-
प्रायश्चित्तम् ।

---

(१) शूद्रस्येति क्रीतलेखितपुस्तकयोर्नोपलभ्यते ।

(२) लघुक्रमेण इति क्रीतलेखितपुस्तकपाठः ।

## अथ धान्यस्तेयप्रायश्चित्तमाह ।

मरीचिः—

ब्राह्मणो द्रव्यलोभेन पारक्यं धान्यमाहरेत् ।
द्रोणं वा प्रस्थमात्रं वा हृत्वा नरकमश्नुते ॥

लिङ्गपुराणे—

मुषित्वा योद्विजोमोहाद्धान्यं द्रोणप्रमाणकम् ।
पारक्यं धन्यमतुलं हृत्वा तु नरकं व्रजेत् ॥
तदन्ते भुवमासाद्य सदने मूषको भवेत् ।

धान्यप्रमाणमाह—

कूर्म्मपुराणे—

पुराणं षष्टिभिर्वीजैस्तद्दयं कोशउच्यते ॥
कोशद्वयन्तु लिङ्गं स्यात् तसत्तद्दयमुच्यते ।
अञ्जलिस्तद्द्वयं राजन् तद्द्वयं[1] कुड़पं स्मृतम् ॥
[2]कुड़पद्वयं तु प्रस्थं स्यात् द्रोणस्तेषां चतुष्टयम् ।
द्रोणानां विंशतिः खारी धान्यमानमितीरितम् ॥
द्रोणद्वयं तु भारःस्यात् ज्ञेयस्तत्पलसङ्ख्यया ।
कोशस्तेये[3] दश प्रोक्तं माविन्नोपठनं मुदा ॥

---

(१) तद्द्वयं पुरुषं स्मृतम् इति क्रोतपुस्तके पाठः ।

(२) मानद्वयं तु सम्भृतं तद्दयं कुड़पं स्मृत मित्यधिकमर्द्धमित पूर्व्वं क्रीत लिखितपुस्तकयोः समुपलभ्यम् ।

(३) आपस्तेयेदश प्रोक्तमिति लिखितपुस्तकपाठः ।

अञ्जलौ शतगायत्रीजपः पापप्रणाशनः।
सहस्रं पुरुषे प्रोक्तं माने ह्ययुतमुच्यते॥
लक्षं तु कुडपे प्रोक्तं प्रस्थे लक्षद्वयं चरेत्।
द्रोणे तु दशलक्षं स्यात् खारीधान्ये यथा शृणु।
सुवर्णस्तेयिनः पापे प्रायश्चित्तं द्विजैर्मुदा[1]॥
तत्तदाचरणीयं स्याद् अन्यथा पतितो भवेत्।
गोधूमतिलमाषाणां स्तेयेन[2] द्विगुणं स्मृतम्॥
श्यामाकमुद्गव्रीहीणां प्रमाणानां तथैवच॥
[3]पावतालकुलित्थानां [4]यवपूर्व्वं समाचरेत्।
ब्राह्मणोयदि लोभेन शोषयेत् खारिकाद्वयम्॥
घृताक्तदेहः सहसा कारीषेण सहाग्निना।
दग्धः शुद्धिमवाप्नोति नान्यथा गतिरिष्यते॥

राजवैश्ययोरेवं प्रायश्चित्तं अन्यस्तेये विवेचनीयम्। शूद्राणा सामलप्रायश्चित्तम्। राजवैश्ययोर्विवाहादिषु संस्कारबलवत्तया विप्रप्रायश्चित्तवदुक्तम्।

इति हैमाद्रौ धर्म्मशास्त्रे धान्यस्तेयप्रायश्चित्तम्।

(१) द्विजैर्मुदा इति क्रीतपुस्तके पाठः।
(२) स्तेयिनोद्विगुणं स्मृतमिति क्रीतपुस्तकपाठः।
(३) यावनालकुलित्थानामिति लेखितपुस्तकपाठः।
(४) यावपूर्व्वमथाचरेत् इति लेखितपुस्तकपाठः।

## अथ वस्त्रस्तेयप्रायश्चित्तमाह ।

स्कान्दपुराणे—

> वस्त्रं मुष्णाति यो विप्रः पारक्यं शास्त्रगर्हितम् ।
> अज्ञानाज्ज्ञानतो वापि तस्य दोषो महान् [1]भवेत् ॥

कूर्म्मपुराणे—

> विप्रो यदि ह पारक्यं वस्त्रमज्ञानतः खलः ।
> तदा दोषमवाप्नोति तं त्यजेदन्त्यजं यथा ॥

शिवपुराणे—

> यो विप्रो दुर्जनासक्तो परवस्त्रं मुषेद्यदि ।
> तस्यैवं पुण्यनाशः स्याद् इति शास्त्रेषु निश्चितम् ॥
> तदन्ते नरकं याति जायते वस्त्रहीनवान् ।

कूर्म्मपुराणे—

> विप्रो मुष्णाति यद्वस्त्रं पारक्यं धर्म्मगर्हितम् ।
> यमलोकमुपागम्य तत्र स्थित्वाऽन्यजन्मनि ॥
> पुनर्भुवमुपागम्य बहुपुत्रो विवस्त्रवान् ।

प्रायश्चित्तमाह देवस्वामी—

> स्थूलतन्तुकृतं वस्त्रं सूक्ष्मतन्तुविनिर्म्मितम् ॥
> चित्रवर्ण्णं तथा नील्नं रक्तं कौसुम्भ[2]रञ्जितम् ।
> पट्टवस्त्रं तु कौशेयं ऊर्णामयमतः परम् ॥

---

(१) महानभूत् इति क्रीतलेखितपुस्तकपाठः ।

(२) रञ्जनमिति लेखितपुस्तके पाठः ।

श्वेतवस्त्रमिति प्रोक्तं तत्तद्धस्तानुसारिणि ।
स्थूलतन्तुकृते वस्त्रे स्तेयं कृत्वा तु पूर्व्वजः ॥*
पश्चात्तापसमायुक्तः प्राजापत्यं समाचरेत्[1] ।
[सूक्ष्मतन्तुकृते वस्त्रे तु मुषित्वा तप्तकृच्छ्रद्वयं चरेत् ॥]
नोलोमये सूक्ष्मवस्त्रे चरेच्चान्द्रायणत्रयम् ।
बहुमूल्ये रक्तवस्त्रे कौशेये च मुनीश्वराः ॥
सद्यः पतति पापात्मा घृताक्तोऽग्निं विशेत्ततः ।
सुवर्णस्तेयिनं प्राहुः तं मौसल्यं विदुर्बुधाः ॥
नान्यथा गतिरस्तीह तस्य भूयिष्ठपापिनः ।
पुनर्दत्त्वा तु तद्वस्त्रं पश्चात्तापसमन्वितः ॥
प्राजापत्यत्रयं कृत्वा शुद्धिमाप्नोति पूर्व्वजः ।
उक्तं यथा क्षत्रियाणां तथा सर्व्वं समाचरेत् ॥
तथा विप्रादिदाराणां वस्त्रतोये यथाक्रमम् ।

विप्राणां यत् प्रायश्चित्तं उक्तं तदर्द्धं तद्दारक्षत्रियादीनाम् । तद्दाराणामेवं प्रायश्चित्तार्द्धक्रमेण योजनीयम् ।

इति हेमाद्रौ धर्म्मशास्त्रे प्रायश्चित्ताध्याये
वस्त्रस्तेयप्रायश्चित्तम् ।

---

* अतःपरम् "शुद्धेन मनसा राजन् तप्तकृच्छ्रद्वयं चरेत्" इत्यधिकः पाठः क्रीतपुस्तके समुपलभ्यते ।

(१) पश्चाताप इत्याद्यर्द्धं क्रीतपुस्तके नोपलभ्यते ।

[—] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलभ्यते ।

## अथ गुरुतल्पगमनप्रायश्चित्तमाह ।

स्कन्दपुराणे—

गुरुतल्पगतानां तु प्रायश्चित्तमिहोच्यते ।
जननी च सपत्नी च राज्ञः[1] पत्नी गुरोस्तथा ॥
मातुलानी स्वभगिनी स्वसा ज्येष्ठस्य नायिका ।
श्वश्रूः कनिष्ठभार्य्या च आत्रेयी च पतिव्रता ॥
एकादश समाख्याताः स्वमाता राजवल्लभा ।
पूज्याश्च वन्दनीयाश्च पोष्या वस्त्रादिभूषणैः ॥
द्विजोऽपि न द्रोहकृत् स्यात्कर्म्मणा मनसा गिरा ।
जननी सर्व्वभूतानां पूज्या वन्द्याश्च तास्तथा ॥
अज्ञानान्मातरं गत्वा तत्सपत्नीमथापि वा ।
स्वयमेव स्वमुष्कं तु च्छिन्द्यात् पापमुदीरयन्[2] ॥
हस्ते गृहीत्वा तन्मुष्कं निर्गच्छेन्निर्ऋतिं दिशम् ।
गच्छन्नेवाग्रतः स्वस्य कदाचिन्न विचारयेत्[3] ॥
अपश्यन् पृष्ठतो गच्छेत् प्राणान्तं प्राप्य[4] शुध्यति ।
मेरुप्रपतनं[5] वापि कुर्य्यात् पापमुदीरयन् ।

[1] राजपत्नी इति कीतलेखितपुस्तकयोः पाठः ।
(२) पापमुदारयेत् इति कीतलेखितपुस्तकयोः पाठः ।
[3] विचारयन् इति कीत लेखितपुस्तकपाठः ।
[4] यस्य शुध्यति इति लेखितपुस्तके पाठः ।
[5] मरुतप्रपतनं इति लेखितपुस्तकपाठः ।

भविष्योत्तरे—

राज्य[1] क्षोभे महातीर्थे संग्रामे देशविप्लवे ॥
पत्नीष्वन्यासु नारीषु स्थितासु मोह[2]पीड़ितः ।
मातरं वा सपत्नीं वा स्वदारभ्रान्तिमाविशन् ॥
पश्चाज्ज्ञात्वा तु मातेति पश्चात्तापमुपाविशन् ।
स्वयमेवासिना मुष्कं छित्वा पापमुदाहरन् ॥
अपश्यन् पृष्ठतो गच्छेत् प्राणान्तं प्राप्य शुध्यति ।
रेतःसेकात् पूर्व्वमेव निवृत्तो यदि मातरि[3] ॥
ब्रह्महत्याव्रतं कुर्य्याद् रेतः[4]सेक्ताऽग्निदाहनम् ।
ज्वलितां सूर्म्मिमालिङ्ग्य मृतः शुद्धिमवाप्नुयात् ॥

ब्रह्माण्डपुराणे—

महातीर्थेषु संग्रामे जनक्षोभे महाभये ।
[तव राजन् मनोसङ्गे महानसि समुद्भवे ॥]
कामातुरः स्वपत्नीति मातरं वापि पद्मजाम् ।
गत्वा सकृत्स्वदारेषु पूर्व्वचिह्नविवर्ज्जिताम् ॥
मातरं सहसा बुद्धा पश्चात्तापपरायणः ।
असिना तीक्ष्णधारेण शिश्नं स वृषणं सकृत् ॥

(१) पुरक्षोभ इति क्रीतपुस्तकपाठः ।
(२) स्थिरपीड़ित इति लेखितपुस्तकपाठः ।
(३) मातरं इति क्रीतलेखितपुस्तकपाठः ।
(४) रेतःसिक्तोऽग्निदाहनम् इति क्रीतलेखितपुस्तकपाठः ।
[ ] अयं पाठः क्रीतपुस्तके नोपलभ्यते ।

छित्वाञ्जलौ समाधाय न पश्चादवलोकयन् ।
स्मरन् नारायणं सम्यक् पुरःस्थमविचारयन् ।
निर्ऋतिं दिशमागच्छेत् मृत्वा शुद्धिमवाप्नुयात् ॥
रेतःसेकात् पूर्व्वमेव स्वमालेति प्रबोधयत् ।
ब्रह्महत्याव्रतं कुर्य्यात् कपालध्वजवर्ज्जितम् ॥
कारीषवह्निना दग्धः शुद्धिमाप्नोति मातृगः ।

मरणादित्यर्थः ।

---

# अथ राजदण्डमाह ।

लिङ्गपुराणे—

विचार्य्य मातृगं विप्रं स्वयमेव न चारतः ।

न चारेभ्य इत्यर्थः ।

भगाकारमयः कृत्वा तापयित्वा हुताशने ।
लेखयेद्दल[1]वद्भृत्यैर्ललाटे मातृगामिनः ॥
आरोहेद्रासभं यानं निःक्वाणं ध्वनयन् जनैः ।
तद्वत्तं पूर्व्ववद्भृत्वा धर्म्मव्रतमिहाचरेत् ॥
[तत्पत्नीष्वथवा दद्यात् तासु दोषो न संस्पृशेत्] ।
अटित्वा नगरीं सर्व्वां जनोऽयं गुरुतल्पगः ॥
इत्युच्चैर्भाषयन् भृत्यैः पुरद्वारमुपागमन् ।
तत्रैव नापितेनाशु असिना तीक्ष्णधारया ॥
छेदयित्वाथ तन्मुष्कं निधायाथ तदञ्जलौ ।
कृत्वा स पापो मुष्कं तत् गृहीत्वा निर्ऋतिं दिशम् ॥
गच्छन् प्राणान् [2]परित्यज्य ततः शुद्धिमवाप्नुयात् ।
अथवा सूर्म्मिमातप्य वह्नौ राजा प्रयत्नतः ।
तैलेन सूर्म्मिमातप्य भृत्यैरालिङ्गयेन्मुदा ॥
मृत्वा शुद्धिमवाप्नोति स राजा दोषवान्नहि ।
मेरुप्रपतनं वापि नान्यथा शुद्धिरिष्यते ॥

(१) लेखयेद् भृत्यवल्लयन् इति क्रीतलेखितपुस्तकपाठः ।

[ - ] अयं पाठः काशीपुस्तके नोपलभ्यते ।

(२) परित्यक्ता इति क्रीतलेखितपुस्तकयोः पाठः ।

रेतः सेकात्पूर्व्वं मातेति ज्ञात्वा ब्रह्महत्याव्रतं कपालध्वजवर्ज्जितं कृत्वा शुद्धिमवाप्नोति । नान्यैः सेतुदर्शनादिभिः । क्षत्रिया-दीनां मातृगमनेऽप्येवमेव प्रायश्चित्तं योजनीयम् । शूद्रस्य मौसल्य-मेव प्रायश्चित्तं पापनाशकं स्यात् । तस्याः स्त्रियास्तदर्ग्धादि । सारमाहृत्याल्पकुटीरं कृत्वा मातरमवस्थाप्य मयूराण्डप्रमाणैः कवलैः प्रत्यहं पोषयेत् । न मातृभ्रान्तिः । मृता चेत् पतित-प्रायश्चित्तार्द्धेन शरीरशुद्धिं कृत्वा परलोकक्रियां कुर्य्यात् ।

तदाहापस्तम्बः—

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥

इतिवत् मातृत्यागो न विगर्हितः । तस्याः शुश्रूषा तु नित्या पति-ताया अपि । सपत्नीप्रभृतिस्त्रीगमनेष्वेवं प्रायश्चित्तं वेदितव्यम् ।

कूर्म्मपुराणे—

सवर्णोत्तमवर्णस्त्रीगमनेन विचारतः ।
ब्रह्महत्याव्रतं कुर्य्यात् द्वादशाब्दं समाहितः ॥
असत्याभामतो पृच्छेत् स्ववर्णाच्चोत्तमाच्च वा ।
कारीषवह्निना दग्धः शुद्धिं याति द्विजोत्तमः ॥
रेतःसेकात् पूर्व्वमेव निवृत्तो यदि मातरि ।
ब्रह्महत्याव्रतं कुर्य्यात् पचेदेकाग्निदाहकम् ॥
स्ववर्णोत्तमवर्णस्थे निवृत्तो वीर्य्यसेचनात् ।
ब्रह्महत्याव्रतं तत्र षडब्दं विधिपूर्व्वकम् ॥

क्षत्रियां पितृभार्य्यान्तु गत्वा विप्रः सकृन्मुने।
ब्रह्महत्याव्रतं कुर्य्यात् नवाब्दं विष्णुतत्परः॥
वैश्यायां पितृभार्य्यायां षड़ब्दं व्रतमाचरेत्।

मातृष्वसारञ्च पितृष्वसारम्
आचार्य्यपत्नीं श्वशुरस्य पत्नीम्।
आचार्य्यपुत्रीमथ मातुलानीम्
पुत्रीं स गच्छेद्यदि कामतो यः॥

दिनद्वये ब्रह्महत्याव्रतं कुर्य्याद्यथाविधि॥
एकस्मिन्नेव दिवसे बहुवारे त्रिवार्षिकम्।
एकवारं कृते त्र्यब्दं व्रतं कृत्वा विशुध्यति॥
दिनत्रये गच्छति चेत् वह्नौ शुध्यति नान्यथा[1]।
चाण्डालीं पुक्कसीं चैव स्नुषां च भगिनीं तथा।
मित्रप्रियां शिष्यपत्नीं यस्तु वै कामतो व्रजेत्।
ब्रह्महत्याव्रतं कुर्य्यात् षड़ब्दं ध्वजवर्ज्जितम्॥

एतासां मातृव्यतिरिक्तानां पापशङ्कावतीनां त्यागएव परम्। अन्यथा संसर्गतो दोषगुणा भवन्तीति।

तदाह कात्यायनः—

पतितां पुत्रगमनां मातरं पोषयेत् सुतः।
कुटीरं वलयाकारं सूक्ष्मं कुर्य्यात् प्रयत्नतः॥
तत्र तां सन्निवेश्याय चतुर्भिः कवलैर्नृप।

---

(१) दिनत्रये गच्छति वह्नौ दग्ध शुध्यति नान्यथा। इति लिखितपुस्तकपाठः।

मयूराण्डप्रमाणैस्तैः प्रत्यहं बन्धुमार्गतः ।
यावता म्रियते माता तावद्धृत्वा प्रयत्नतः ॥
पतितस्य यदुक्तं तत् प्रायश्चित्तार्द्धमाचरेत् ।
परलोकक्रियाः सम्यक् कृत्वा शुद्धिमवाप्नुयात् ॥
अकृत्वा दोषमाप्नोति पुत्रस्तत्पापशुद्धये ।
एतासामार्य्यनारीणां त्यागएव विधीयते ॥

राजवैश्ययोरिदमेव प्रायश्चित्तं विधीयते ।

वर्णत्रयस्य विप्राणां भार्य्या माता विधीयते ।
तद्दारेषु यदा गच्छेद् वर्णत्रयमकामतः ।
तत्रापि पितृवद् बुद्ध्या प्रायश्चित्तं समाचरेत् ॥
शूद्रस्य मौमलं प्राहुरिति शास्त्रेषु निश्चितम् ।
कामः सर्व्वधनाहारी कामः पुण्यविनाशकृत् ॥
कामः पापकरो नित्यं कामोऽनर्थप्रदायकः ।
कामः शत्रुर्मनुष्याणां तस्मात् कामं परित्यजेत् ॥
संसारेऽस्मिन् महाघोरे मोहनिद्रासमाकुले ।
ये हरिं शरणं यान्ति कृतार्थास्ते न संशयः ॥
पुत्र-दार-गृह-क्षेत्र-धन-धान्य-विमोहिनीम् ।
लब्ध्वेमां मानुषीं वृत्तिं रे रे गर्व्वं तु माकृथाः ॥
सन्त्यज्य कामं क्रोधं च लोभं मोहं मदं तथा ।
परापवादं निन्दां च यजध्वं भक्तितो हरिम् ॥
माता हरिः पिता देवम् ज्येष्ठभ्राता जनार्द्दनः ।
गुरुर्विष्णुः प्रसन्नात्मा राजा प्रत्यक्षदैवतम् ॥

तद्दारास्तु तथाज्ञेयास्तस्माद्द्रोहं न कारयेत्।

आपस्तम्बः—

"गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलौ आधाय दक्षिणां दिशमनावृत्तिं व्रजेत्। ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्"* इति दोषस्मरणात् तद्दारेषु द्रोहबुद्धिर्न कार्य्या।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये गुरुतल्पगमनप्रायश्चित्तम्।

---

* आपस्तम्बधर्म्मसूत्रे १-६-२५ १-२।

## अथ तत्संयोगिप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

महापातकसंसर्गे महासान्तपनं स्मृतम् ।
सङ्गं कृत्वार्द्ध[1]मासे तु उपवासान् दशाचरेत् ॥
[2]पराकं माससंसर्गे चान्द्रं मासत्रये व्रतम् ।
कृत्वा षण्माससंसर्गे कुर्य्याच्चान्द्रायणत्रयम् ॥
किञ्चिन्न्यूनाब्दसङ्गे तु षण्मासं व्रतमाचरेत् ।
अब्दस्य त्रिगुणं प्रोक्तं ज्ञानात्सङ्गे यथाक्रमम् ॥
यस्तु संवत्सरं त्वेतैः शयनासनभोजनैः ।
वसेच्च[3] सह्नितं विन्द्यात् पतितं सर्व्वकर्म्मसु ॥
महापातकिनस्त्याज्याः सर्व्वदा विप्रसत्तमैः ।
महापातकिनो लोके दर्शनात् पापदायिनः ॥
स्पर्शान्नरकदा नित्यं स्मरणाल्लोकहारिणः ।
[4]सत्सङ्गतिः सदा नृणां कामधेनूपमा स्मृता ॥
अतः सत्सङ्गतिः कार्य्या नृभिः पुण्याभिलाषिभिः ।
पुण्यमेव सदा कार्य्यं पुण्यमेव सदा स्मरेत् ॥

---

(१) कृत्वा तु मासे तु इति क्रीतपुस्तकपाठः ।
(२) पराकान् इति क्रीतलेखितपुस्तकयोः पाठः ।
(३) वसेच्चेत् इति लेखितपुस्तके पाठः ।
(४) सल्लोगतिः इति क्रीतपुस्तके पाठः ।

पुण्यमेव [1]सदा पश्येत् तस्मात् पुण्याधिकं न च ।
अतोमहद्भिः संसर्गः कर्त्तव्यो धर्म्म[2]वित्सुधीः ॥
दुःसङ्गं वर्ज्जयेन्नित्यं सुराभाण्डादिकं यथा ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
महापातकिसंसर्गप्रायश्चित्तम् ।

---

१ पुण्यमेवच संपश्येदिति क्रीतपुस्तके पाठः ।
२ धर्म्मवित्सुभिः इति क्रीतपुस्तकपाठः ।

[अथेदानीं उपपातकप्रायश्चित्तं ब्रुवन् गोवध-
प्रायश्चित्तमाह ।]

मार्कण्डेय पुराणे—

सर्व्वेषामेव वर्णानां ब्राह्मणः परमोगुरुः ।
तथा च पशुजन्तूनां गौर्मातेति प्रगीयते ॥
विप्रहत्या च गोहत्या सममेतद्द्वयं नृणाम् ।
पुरा चतुर्म्मुखोब्रह्मा सृष्ट्वादौ सृष्टवांश्च गाः ॥
यज्ञान् वेदांश्च विप्रांश्च अरणिं स्रुक्स्रुवादिकान् ।
सृष्टवान् यज्ञरक्षार्थं महीपालानतःपरम् ॥
गावो विप्राश्च यज्ञाश्च पुनन्तीह[1] महीमिमाम् ।
गोहिंसां यो नरः कुर्य्यान्निष्कारणतया न्विह[2] ।
न तस्य निष्कृति[3]श्चास्ति प्रायश्चित्तशतैरपि ॥

गोमवएव कारणं हनने [4]मधुपर्कश्च । तयोरभावाद् गो-
हिंसनं गर्हितमेव कलियुगे ।

अग्न्याधेयं गवालम्भं सन्न्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्ज्जयेत् ॥

यज्ञार्थमेव गोहिंसनं नान्यदा[5] ।

---

[ ] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलभ्यते ।

(१) पुनन्ति हि इति क्रीतलेखितपुस्तकपाठः ।

(२) चयः इति क्रीतपुस्तके यमः इति लेखितपुस्तके पाठः ।

(३) निष्कृतिर्नास्ति इति लेखितपुस्तके पाठः ।

(४) मधुपर्के च इति क्रीतलेखितपुस्तकपाठः ।

(५) नान्यत्र इति क्रीतपुस्तकपाठः ।

गोहिंसां मुखजः कृत्वा महापापमवाप्नुयात्।
तथैव विप्रहिंसाञ्च महतां गर्हितं द्वयम्॥

## हिंसा दशविधा।

तदाह गौतमः--

क्रूररज्ज्वा कण्ठबन्धो दारुबन्धस्तथा गले।
निराधारे स्थले बन्ध स्तथा ग्रास[1] निपीड़नम्॥
ताड़नं रज्जुदण्डाद्यैस्तथा सञ्चाररोधनम्।
शृङ्गच्छेदस्तथा वाहोद्विवारं दोहनं तथा॥
वत्से मृते च चौराणामादानं चर्म्मवत्सतः।
इतीह दशधा हिंसा गवां प्रोक्ता मनीषिभिः॥
एताभि र्गां यदा हिंस्यात्तदा गोबध इष्यते।
गोमूत्रं गोमयं क्षीरं दधि सर्पिरितीरितम्॥
महापातकिनां चैव तथैव क्षुद्रपापिनाम्।
पापं चतुर्व्विधं प्रोक्तं शुष्कं चार्द्रं महत्तरम्॥
उपपातकमित्येतत् चतुर्द्धा परिकीर्त्तितम्।
उक्तस्यैतस्य पापस्य पञ्चगव्यं विशोधनम्॥
गौर्य्यस्य च गृहे नास्ति होमार्थं पापनाशिनी।
तद्गृहं रुद्रभूमिः स्याद्गृहस्थः स च पापकृत्॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
सर्व्वभूतदयालुत्वं षड्विधं गृहमेधिनाम्॥

(१) तथा ग्रासनिपीड़ने इति कोनपुस्तकपाठः।

गौर्यत्रैव सदा तिष्ठेत् तत् क्षेत्रं काशिकासमम् ।
न सन्ति तत्र पापानि तथा बालग्रहाग्रहाः ॥
नमस्कारैः सेवितव्या सत्यापि मनसापि गौः ।
तथा सम्पाद्य बहुभिर्धनैर्वा पापमुक्तये ॥
एतां धेनुं यदा विप्रो हिंस्याच्चेन्नगुड़ादिभिः ।
महापापमवाप्नोति योवा कोवा भुवस्तले ॥
तदन्ते भुवमासाद्य चाण्डालत्वमवाप्नुयात् ॥

चण्डिकाखण्डे—

गोहन्ता यस्तु वै लोके रज्जुपाषाणवेष्टनैः ।
अरण्ये वा गृहे वापि रोषाद्वा कामकारतः ॥
यमालयमुपागम्य नरकञ्चानुभूय च ।
तदन्ते भुवमासाद्य जायते त्वग्गरोगवान् ॥

लिङ्गपुराणे —

यो द्विजोमदलोभेन मत्सरादोर्ष्यया नृप ।
गां हत्वा यस्य कस्यापि विपिने वा जलाशये ॥
रज्जुकण्ठाश्मभिर्घोरैः कण्ठभेदनपीड़या ।
भवेत्तस्य महान् दोषः प्रायश्चित्तीभवेद्ध्रुवम् ॥
हत्वा तु मुखजो ज्ञानान्मदेन महता वृतः ।
नरकान्न निवर्त्तेत प्रायश्चित्तं विना प्रभो ॥
पश्चात्तापसमायुक्तः पराकं कृच्छ्रमाचरेत् ।
अज्ञानतः पराकः स्यात् ज्ञात्वा चान्द्रायणं स्मृतम् ॥
कामतो गोवधे चैव शुद्धिर्दृष्टा मनीषिभिः ।

नागरखण्डे—

अकामतः कामतो वा विप्रो हन्याच्च गां शुभाम् ।
तस्यैव शुद्धिरुदिता पराकश्चान्द्रभक्षणम् ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुद्धिमान् ।
अन्यथा दोषमाप्नोति अर्शोरोगी भवेद्भुवि ॥

विष्णुधर्म्मोत्तरे—

सांपराकं ? च धेनुं यो मुखजो मत्सरोद्धतः ।
हन्ति दण्डादिभिः पापी तस्य देहविशुद्धये ॥
अज्ञानात्तु पराकः स्यात् ज्ञानाच्चान्द्रस्य भक्षणम् ।
हत्वा[1] तु रोगिणीं वृद्धां पराकं कृच्छ्रमाचरेत् ॥
युवतीं गां द्विजो हत्वा[2] कुर्य्याच्चान्द्रायणं सकृत् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
गोवधप्रायश्चित्तम् ।

---

१ यो हत्वा इति क्रीतलेखितपुस्तकपाठः ।
२ हन्यादिति क्रीतलेखितपुस्तकपाठः ।

## अथ निमित्तगोवधप्रायश्चित्तमाह ।

कूर्म्मपुराणम्—

अनाधारे स्थले बन्धौ निराहारो गवामिह ।
एभिर्निमित्तैरन्यैश्च पतनाद्भित्तिवृक्षयोः ॥
यदा[1] म्रियेत वा धेनुर्हत्या तत्स्वामिनो भवेत् ।
अतः स्वामी परामृश्य कुर्य्यात्तद्रक्षणं सदा[2] ॥
तत्पोषणे महत्पुण्यमनन्तं परिकीर्त्तितम् ।
तदुपेक्षा महत्पापं पतनं जन्मजन्मसु ॥
अग्निहोत्रस्य या धेनु र्या[3] धेनुः शम्भुभाषणे ।

अभिषेकार्थमित्यर्थः ।

या धेनुर्गुर्व्विणी राजन् या धेनुः कपिलात्मिका ।
एते[4] निमित्तैः सा धेनुर्हता यदियमाज्ञया ॥
तत्स्वामी मुनिभिः प्रोक्तो गोहन्तेति न संशयः ।
अग्निहोत्रादिधेनूनामिकां वापि निमित्तजैः ॥
हन्ता तत्पापमोक्षार्थं पराको मुनिचोदितः ।
इतरासां गवां राजन् निमित्तैरेभिरग्रतः ॥
हननं प्राप्यते दैवात् स्वामिना चान्द्रभक्षणम् ।
अशक्तो रोगदण्डाभ्यां हन्तिश्चेतैः प्रमादतः ॥

[1] यथा इति लेखितपुस्तके पाठः ।

[2] मुदा इति लेखितपुस्तके पाठः ।

[3] तया शम्भुं प्रपूजयेत् इति क्रीतपुस्तकपाठः ।

[4] तैर्निमित्तै सा हि धेनु इति क्रीतपुस्तकपाठः ।

तत्स्वामिने तप्तकृच्छ्रं मुनिभिःपरिकीर्त्तितम्।
अग्निदाहे प्रधानस्यच्छेदे रोगनिवृत्तये॥
यदि दैवान्मृतिः प्राप्ता प्राजापत्यं विशुद्धिदम्।
दारुणा गुरुणा कण्ठे लग्ने पतति[1] याच गौः॥
मृता[2] तद्दोषशान्त्यर्थं पराकः क्षकृमीरितम्।
तत्सुतामध्यदेशे तु बन्धने ताड़नेऽपि वा॥
क्रियादेशे वनैकान्ते मृता या धेनुरग्रतः।
प्राजापत्यद्वयं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः॥
औषधं रोगमोक्षाय कर्त्ता कुर्य्याद्गवामिह।
तेनौषधेन या धेनुर्मृतिमाप सुदुस्तराम्॥
तत्र चान्द्रायणं प्रोक्तं प्रायश्चित्तं विशुद्धये।
तत्र चौरधृते धेनुरक्षणाय गवामिह॥
कुर्य्यात् तद्विपरीतं चेन्मृता चेद्धेनुरग्रतः।
तत्रैव हत्या महती तप्तकृच्छ्रद्वयं चरेत्॥
पतने भित्तिवृक्षाणां शङ्कितानां नृपोत्तम।
तत्र बद्धा च या धेनुर्मृता तत्पतने तथा॥
तदा तद्देहशुद्ध्यर्थं प्रोक्तं चान्द्रायणं द्विजैः।
काठिन्यरज्जुबन्धेन यदा गौर्निधनं गता॥
पराकः पापशुद्ध्यर्थं वह्निदाहेऽप्यमोचने।
पराकस्तत्र योक्तव्यो निम्नोन्नतभुवःस्थले॥

१ नर्य्यति या च गौः इति लेखितपुस्तकपाठः।
२ मृत्वा इति लेखितपुस्तकपाठः।

तत्रापि पराकइत्यर्थः ।

एतासां गवामेतैर्निमित्तैः हननप्राप्तौ तद्दोषोपशान्त्यर्थं तत्तत्प्रतिपदोक्तं प्रायश्चित्तम् । लोकमाहात्म्यात् तत्तत्कर्म्मानुरोधेन नेच्छन्ति चेत् तदा दोषमाह—

गौतमधर्म्मे—

एभिर्निमित्तैः स्वकृतैर्यदा यत्रैव धेनवः ।
पञ्चत्वं यदि गच्छन्ति स्वामिनः पश्यतः सतः ॥
हत्या प्राप्ता[1] सुमहती लोकद्वयविगर्हिता ।
यस्य[2] दोषस्य यत्प्रोक्तं तत्तत्कुर्य्याद्विशुद्धये ॥
अन्यथा लोकसाहात्म्यात् प्रायश्चित्तपराङ्मुखः ।
यदि [3]वर्त्तेत लोकेऽत्र पुत्रदारप्रजान्वयः ॥
अन्ते नरकमासाद्य मातङ्गत्वमवाप्यते ।
तदन्ते भुवमासाद्य भिल्लो भवति गर्हितः ॥
तस्माद्देहविशुद्ध्यर्थं कुर्य्यान्निष्कृतिमुत्तमाम् ।
विप्रहत्या च महती तथा धेनुविहिंसनम् ॥
उभयोर्यदि हत्या तु कर्त्तुर्नोविहिता गतिः ।
अप्रमत्ततया राजन् धेनवो [4]मातृवत्सदा ॥
पोषणीयाः पालनीया वर्णैस्त्रिभिरिहादरात् ।

(१) हत्या च प्राप्ता महती इति क्रीतपुस्तकपाठः ।
(२) यदा दोषस्य इति लिखितपुस्तकपाठः ।
(३) वर्त्तयेद्यदि लोकेऽत्र इति क्रीतपुस्तकपाठः ।
(४) स्नुतवत्सका इति क्रीतकाशीपुस्तकयोः पाठः ।

क्षत्रियवैश्ययोरप्येवं प्रायश्चित्तं निमित्तगोहनने वेदितव्यम्। शूद्राणामेतत्साक्षाद्धनने शतरूपकेण दण्डः। विप्रस्त्रीणामेतासां हनने विप्रस्यार्द्धं प्रायश्चित्तम्। क्षत्रियवैश्यस्त्रीणामपि स्वजाति-पुरुषाणां प्रायश्चित्तार्द्धं कल्पनीयम्। शूद्रस्त्रीणां शूद्रवदाज्ञा राज्ञा कर्त्तव्या न स्त्रीतिविचारणीयम्।

तदाह लिङ्गपुराणे—

बाहुजोरुजपादाब्जजातानां हनने गवाम्।
निमित्तैर्वाथ साक्षाद्वा प्रोक्ता विप्रस्य निष्कृतिः॥
निमित्तहनने वाथ विप्राणां यदुदीरितम्।
तत्कर्त्तव्यं नृपैर्वैश्यैस्तत्स्त्रीणामिदमीरितम्॥
विप्रस्त्रीणां तथाप्रोक्तं शूद्राणां प्राण[1]पीड़नम्।
तत्स्त्रीणाञ्च तथा कार्य्यं निमित्तेन शतं विदुः॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
निमित्तगोवधप्रायश्चित्तम्।

(१) प्राणिपीड़नं इति लेखितपुस्तकपाठः।

## अथ गोवत्सहननप्रायश्चित्तमाह ।

मार्कण्डेयपुराणम्—

वत्सश्च त्रिविधः प्रोक्तो बालः पौगण्डको युवा ।
एतेषां हनने विप्रो निमित्तं कृत वा स्वयम् ॥
चाण्डालत्वमवाप्नोति त्रिषु जन्मसु पञ्चसु ।
अतो वत्साः पोषितव्या विप्रैर्लोकेप्सुभिः सदा ॥

यावत्[1] तृणभक्षणेन स्वोदरपूरणं न जानाति स बालः । मातरं त्यक्त्वा स्वेच्छया सञ्चरति स पौगण्डकोवत्सः । गर्भधारणसुखं ज्ञात्वा अनडुद्भिः सह सञ्चरति स युवा । वत्सजननातन्तरं गौः । एतेषां हनने पृथक् पृथक्[2] दोषं प्रायश्चित्तञ्चाह ।

कौर्म्मे—

स बालोदरपूर्त्त्यर्थं यावत्कालं तृणादनः ।
ऊधस्यां मातरं त्यक्त्वा सञ्चरन् स्वेच्छया नृप ॥
पौगण्डकः स विज्ञेयः सञ्चरन् मत्तमत्तवत् ।
गोवृषैः सह यः क्रीड़न् स युवा त्रिविधः स्मृतः ॥
सा गौ र्या वत्ससूर्त्तया महापातकनाशिनी ।
एतेषां त्रिविधानाञ्च मध्यैको यो निहन्यते ॥

येन हन्यते इत्यर्थः । छन्दोवत् पुराणानीति कृत्वा अर्थ[3]सौष्ठवं न विचारणीयम् ।

(१) यवत्तृणभक्षणं इति क्रीतपुस्तके पाठः ।

(२) दोषप्रायश्चित्तमाह इति क्रीतपुस्तके पाठः ।

(३) अर्थसौष्ठवाद्विचारणीयमिति क्रीतपुस्तके पाठः ।

तदाह नारदीये--

"राजा योऽहन्यत तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण" इति

लिङ्गपुराणे--

वत्सानां त्रिविधानाञ्च एकं हन्याद्द्विजो यदि ।
तत्तत्पापफलं भुक्त्वा चाण्डालत्वमवाप्यते ॥
बालं हन्याद्द्विजोयस्तु क्षीरादानान्निमित्तजैः[१] ।
प्राजापत्यद्वयं साक्षात् निमित्तैरेकमुच्यते ॥
कृत्वा शुद्धिमवाप्नोति अन्यथा पशुघातकः ।

स्कन्दपुराणे--

यो बालवत्सं कामेन निमित्तैर्वा स्वयं हनेत् ।
तत्र देहविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥
निमित्तैर्वा यदा हन्यात् क्षीरादानादिभिः क्रमात् ।
निमित्तपापमित्युक्तं प्राजापत्यं समाचरेत् ॥
विप्रस्त्रीणां तदर्द्धं स्यात् बालवत्सविहिंसने ।
क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं भवेत् ॥
तत्तत्स्त्रीणां तदर्द्धं स्यात् पादजं दण्डयेच्छतम् ।
पौगण्डकं तु योवत्सं निमित्तैर्वा स्वयं हनेत् ॥
तत्रैवेदं विशुद्ध्यर्थं तप्तकृच्छ्रं चरेत् पुरा ।

---

[१] क्षीरदानर्निमित्तजैः इति क्रीतपुस्तके पाठः ।

विष्णुधर्म्मोत्तरे

येन विप्रेण पौगण्डोवत्सोयदि निहन्यते ।
तस्य देहविशुद्ध्यर्थं तप्तकृच्छ्रत्रयं चरेत् ॥

शिवधर्म्मोत्तरे—

पौगण्डकं सदोन्मत्तो गोकुले स्वगृहेऽथवा ।
निमित्तैः पूर्व्वजो विप्रो हन्यादेवं[१] प्रचोदितम् ॥
तद्दोषपरिहारार्थं चरेत्तप्तं यथाविधि ।
पञ्चगव्यं ततः पश्चात् पिबेदन्नाननाशनम् ॥
क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं स्मृतम् ।
विप्राङ्गनानां क्षत्रियादिस्त्रीणां तत्तत्प्रायश्चित्तार्द्धं कल्पनीयम् । पादजं शतेन दण्डयेत् ।

गारुड़पुराणे—

युवानं गोवृषं हन्यात् पूर्व्वजः स्वयमादरात् ।
निमित्तैर्वाथ राजेन्द्र परप्रेरणया[२] तया ॥
महान्तं नरकं गत्वा जायते वृषसूनवान् ।
वृषस्य शृङ्गद्वयसूचकौ तद्वत्सूनावस्य वत्सस्य हन्तुः, तत्स्थाने अङ्कुरद्वयवान् भवेदित्यर्थः ।

(—) अयं पाठः कौतकाशीपुस्तकयोर्न दृश्यते ।
(१) हन्याद्दैवप्रचोदितः इति कौतपुस्तके पाठः ।
(२) प्रेरणया तया इति लेखितपुस्तकपाठः ।

भविष्योत्तरे—

युवानं गोवृषं हत्वा पूर्व्वजो बाहुजो वणिक्।
महान्तं नरकं भुक्त्वा जायते शोकवान् भुवि॥

स्कन्दपुराणे—

अरण्ये जलमध्ये वा स्वगृहे वा द्विजोत्तमः।
युवानं गोवृषं हन्यान्निमित्तं कृत वा स्वयम्॥
तत्तत्पापफलं भुक्त्वा जायते भुवि रोगवान्।
तस्य दोषस्य शान्त्यर्थं कुर्य्याच्चान्द्रस्य[1] भक्षणम्॥
गोदानञ्च ततः कुर्य्यात्पञ्चगव्यमनन्तरम्।
कृत्वा शुद्धिमवाप्नोति नीरोगो जायते भुवि॥
विप्रस्त्रीणां तदर्द्धं स्यात्प्रायश्चित्तमुदीरितम्*।

क्षत्रियवैश्यानां तदङ्गनानाञ्च द्वैगुण्यं त्रैगुण्यं तदर्द्धं च क्रमेण योजनीयम्।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
गोवत्सहननप्रायश्चित्तम्।

(१) चान्द्रायणव्रतमिति क्रीतपुस्तके पाठः।

* तत ऊर्द्ध्वं गहनं गोवधप्रायश्चित्तवत् सुवर्णविक्रीतविवेकतया योजनीयं इत्यधिक पाठ समुपलभ्यते क्रीतपुस्तके।

## अथोत्सृष्टवृषहननप्रायश्चित्तम् ।

कूर्म्मपुराणे—

एकादशेऽह्नि सम्प्राप्ते पित्रोर्मरणसम्भवे ।
पिशाचत्वविमुक्त्यर्थं उत्सृष्टोयोवृषः परैः ॥
हन्यते यदि राजेन्द्र अङ्कितः शिवमुद्रया ।
शिवद्रोहीति विख्यातः सर्व्वधर्म्मवहिस्कृतः ॥
मृत्वा नरकमासाद्य चाण्डालत्वमवाप्नुयात् ।
तस्यैव निष्कृतिर्नास्ति कारोषहननाद्दते ॥

स्कन्दपुराणे—

पित्रोरर्थं तु काम्यार्थं जनैरुत्सृष्टमुत्तमम् ।
शिवलिङ्गाङ्कितं सम्यक् शिवरूपं जनाधिप ॥
वृषं हन्याद् यदा विप्रः केदारक्षेत्र[1]भक्षणात् ।
परप्रेरणया वापि अरण्ये ग्रामएव वा ॥
रज्जुबन्धादिभिः सम्यक् सहायैरुपदिष्टवान् ।
तदुपायप्रदो मर्त्त्यः सदापिशाचपरायणः ॥
हन्ता तस्य महापापी चत्वारः पापभागिनः ।
राजा तं दण्डयेत् सम्यग् विचार्य्य बहुवार्त्तया ॥
तेषां भालेषु[2] कर्त्तव्यं तप्तलिङ्गं नृपोत्तमैः ।
निःशाणं[3] वादयन् भृत्यैर्वृषहन्तेति सर्व्वतः ॥

---

(१) क्षेत्रभाषणादिति क्रीतपुस्तकपाठः ।

(२) तेषां कालेषु कर्त्तव्यं इति क्रीतपुस्तकपाठः ।

(३) निःसार्य्य इति क्रीतपुस्तकपाठः ।

अटित्वा नगरीं सर्व्वां निर्व्वास्या विषयाद्बहिः ।
तदा प्रभृति ते सर्व्वे तीर्थे तीर्थे समाचरन् ॥
आर्षेयेषु च देवेषु चरन्तः प्रत्यहं मुदा ।
पश्चिमद्वारकामेत्य हंसद्वारे तथोत्तरे ॥
तथैव पूर्व्वदिग्भागे गङ्गासागरसङ्गमे ।
तथैव दक्षिणे भागे चापाग्रे गन्धमादने ॥
एवं क्रमेण कुर्व्वन्तः[1] भूपरिक्रमणं त्रिभिः ।
चापकोटिमुपागम्य तत्र स्नात्वा दिनत्रयम् ॥
पश्चात्तापसमायुक्ताः सभामागम्य वाग्यताः ।
तदनुज्ञामवाप्याथ चरेयुश्चान्द्रभक्षणम् ॥
पञ्चगव्यं ततः पीत्वा गांदद्याद्विप्रपुङ्गवे ।
एतेन शुद्धिमाप्नोति वृषहा रघुनन्दन । इति ॥

ब्रह्मवैवर्त्ते —

यो विप्रो वृषभं हन्यात् शिवलिङ्गाङ्कितं तनौ ।
भाले[2] तप्तशिखं[3] कृत्वा निःशाणं[4] ध्वनयेत् स्वयम् ॥
त्रिवारं क्ष्मां परिक्रम्य ब्रह्मचर्य्यव्रते स्थितः ।
पश्चात्तापं समागम्य गन्धमादनपर्व्वते ॥

(१) कर्त्तव्यं इति क्रीतलेखितपुस्तकयोः पाठः ।
(२) फाले इति लेखितपुस्तकपाठः ।
(३) तप्तशिरं इति लेखितपुस्तके पाठः ।
(४) निःमार्य्यं इति क्रीतपुस्तकपाठः ।

तत्र स्नात्वा[1] त्रिवारं च राममिङ्गं निरीक्षयेत् ।
पश्चात्तापमुपागम्य सभां नत्वा तदाज्ञया ॥
चान्द्रायणं ततः कुर्य्याद् दद्याद् विप्राय गां शिवाम् ॥
पञ्चगव्यं ततः पीत्वा शुद्धो भवति नान्यथा ।
राजा हन्यात् पूर्व्वमुक्तं वृषभं शिवलाञ्छितम् ॥
दद्यादात्मसमं हेम सहस्रं वा गवां चरेत् ।
विप्राङ्गना परित्याज्या पोषणीया न दानतः ॥
राजस्त्रीणां शतं प्रोक्तं गवां विप्रेभ्यश्चादरात् ।
वैश्यस्य राजवत्[2] प्रोक्तं तत्तत्स्त्रीणां तथैव च ॥
शूद्रं हन्याददोहन्ता तत्र तं निहनेद् भुवि ।
सहस्रेणाऽथवा दण्ड्याद् अन्यथा दोषमाप्नुयात् ॥
इति हेमाद्रौ उत्सृष्टवृषहननप्रायश्चित्तम् ।

---

(१) स्नानं इति क्रीतलेखितपुस्तकयोः पाठः ।
(२) राजपुत्रोक्तं इति क्रीतलेखितपुस्तकयोः पाठः ।

## अथ बलीवर्द्दहननप्रायश्चित्तम् ।

शिवधर्म्मोत्तरे—

अनड्वान् हन्यते विप्रैरज्जुदण्डशिलादिभिः ।
गृहे वा विपिने तोये भारोद्वाहनकर्म्मणि ।
ज्ञानतोऽज्ञानतो वापि रोषाद्वा मत्सरादपि ॥
न तेषां निष्कृतिश्चास्ति तप्तकृच्छ्रैस्त्रिभिर्विना ।

वराहपुराणे—

जलमध्ये भारवाहे कृषिकाले च वाहने ।
गृहे जले वने वापि अनड्वान् यदि हन्यते ॥
पादादिताड़ने चैव शृङ्गच्छेदे च दाहने ।
लाङ्गूलखण्डने वापि निमित्तैः पूर्व्वचोदितैः ॥
एतैरन्यतमैर्वापि विप्रोहन्याद् धुरन्धरम् ।
तस्यैव निष्कृतिमिमां प्रादिशन् मुनिपुङ्गवाः ॥
तप्तकृच्छ्रत्रयं कृत्वा पञ्चगव्यं पिवेत्ततः ।
एतस्माच्छुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥
अनड्वान् येन[१] यत्रैव निमित्तैरुत वा नृप ।
हन्यते सोऽपि दुष्टात्मा प्रायश्चित्तीभवेत्तदा ॥
राजा तं सम्यगालोच्य दण्डयेच्छ्रुतरूपतः ।
पश्चात्तापसमायुक्तस्तप्तकृच्छ्रत्रयं चरेत् ॥

---

१ येन इति कोतनेखितपुस्तकपाठः ।

पञ्चगव्येन पूतात्मा शुद्धिमाप्नोति नैष्ठिकीम् ।
राजा हन्यादनड्वाहं आयुधैर्बहुभिर्यदा ॥
तदा नरकमाप्नोति प्रायश्चित्तार्द्धमर्हति ।

विप्रस्य प्रायश्चित्तार्द्धं कुर्य्यादित्यर्थः

बणिक्पुत्रस्तु बाणिज्ये अनड्वाहं यदा हनेत् ।
शूद्रो हन्याद्बलीवर्द्दं निमित्तैरुत कामतः ॥
शतरूपेण तं दण्ड्यादथवा हस्तमोचनम् ।

हस्तच्छेदनमित्यर्थः । तत्तत्स्त्रीणां तत्तत्प्रायश्चित्तार्द्धं योजनीयम् । बालतारुण्यादिकं पूर्व्वमुक्तम् । बालपौगण्डकुमारावस्थासु यत्र यत्र हननं तत्तत्प्रायश्चित्तं पूर्व्ववत्कल्पनीयम् । भारवाहोऽनडुहो-हनने उक्तप्रायश्चित्तं विशोधनम् ।

इति हेमाद्रौ बलीवर्द्दहननप्रायश्चित्तम् ।



## अथ गजवधप्रायश्चित्तमाह ।

लिङ्गपुराणे—

सहायैः साधनोपायैः वाग्भिर्वापि समन्ततः[1] ।
अरण्ये वा स्ववासे वा योहन्यादविचारयन् ॥
पश्चान्नरकमाप्नोति जायते गजचर्म्मवान् ।
तद्दोषपरिहारार्थं तप्तकृच्छ्रं चरेद्बुधः ॥

कूर्म्मपुराणे—

उपघाताद्धननं तस्य सहायैरुत साधनैः ।
अन्यैरङ्गीकृते वापि योविप्रोहस्तिनं हनेत् ॥
राजा तं दण्डयेत्पश्चात् शतरूप्येण दण्डतः ।
स पश्चान्नरकं प्राप्य कुष्ठव्याधियुतोभवेत् ॥
पश्चात्तापसमायुक्तस्तप्तकृच्छ्रं विशुद्धये ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥
तदर्द्धं करिपोते च तदर्द्धं गर्भमोचने ।
तत्स्त्रीणान्तु तदर्द्धं स्यात् प्रायश्चित्तमुदीरितम् ॥
लक्ष्मीकामोराजा युद्धादन्यत्र न[2] हस्तिवधं कुर्य्यात् ।

१ विप्रसत्तम इति लिखितपुस्तकपाठः ।
२ न इति क्रीतपुस्तके नोपलभ्यते ।

तदाह देवीपुराणे—

सांपराये गजं हन्याद् यदि स्वहनने स चेत् ।
तदा तस्य न दोषः स्यादित्याह भगवान् यमः ॥
गजयुद्धे गजं हन्यादन्यथा दोषभाग्भवेत् ।
लक्ष्मीः क्षीयेत तस्यास्य[1] परत्र नरकं व्रजेत् ॥

स्कन्दपुराणे—

संपत्कामो युद्धकालादन्यत्र करिहिंसनम् ।
न कुर्य्याद् यदि दुष्टात्मा तस्य सम्पद्विनश्यति ॥
मृत्वा नरकमाप्नोति सांपराये न दोषभाक् ।
आत्माभिमुखमायान्तं हन्तुं स यदि गच्छति ॥
तदाहन्याद्गजं राजा न दोषस्तत्र तस्य[2] हि ।
राजा पश्चात्प्रकुर्व्वीत तत्प्रकृच्छ्रद्वयं मुदा ॥

इदं युद्धादन्यत्र गजहनने वेदितव्यम् । युद्धे हत्वा तात्कालिक-गोदानात् शुद्धिः ।

मार्कण्डेयपुराणे—

युद्धादन्यत्र योराजा प्रमादाद्धस्तिनं हनेत् ।
तत्पापशोधनं तत्र प्राजापत्यत्रयं चरेत् ॥
युद्धे गोदानमात्रेण शुद्धो भवति निश्चयः ।
तदर्द्धं करिपोते स्यात् तदर्द्धं गर्भमोचने ॥

---

(१) तस्यास्तु इति क्रीतपुस्तकपाठः ।
(२) तत्र तत्र हि इति क्रीतपुस्तकपाठः ।

वैश्यानान्तु तदर्द्धं स्यात् तत्तत्स्त्रीणां तदर्द्धकम् ।
शूद्रां वै दण्डयेद्राजा शतनिष्कं हरेत्तु[1] वा ।
[ पोते स्यादङ्गुलिच्छेदो गजे स्याद्धस्तमारणम् ][2] ।

इति हेमाद्रौ गजवधप्रायश्चित्तम् ।

---

(१) हरेत्तु वा इति क्रीतपुस्तकपाठः ।
(२) इदमर्द्धं क्रीतकाशीपुस्तकयोर्न दृश्यते ।

## अथ अश्ववधप्रायश्चित्तमाह ।

स्कान्दपुराणे—

अश्वहन्ता भवेद्विप्रो लोके वेदवहिष्कृतः ।
पूर्व्वोक्तैर्वा निमित्तैर्वा सहायैरुत वा शरैः ।
स विप्रोनरकं याति कालसूत्रं सुदारुणम् ।

मार्कण्डेयपुराणे—

मारयित्वा हयं विप्रोनिमित्तैर्बहुभिर्यदा ॥
हन्यात् स्वयं वा राजेन्द्र गृहे वा कानने जले ।
सपश्चान्नरकं याति यावदाभूतसंप्लवम् ॥
तस्यैव निष्कृतिरियं व्यासेन परिभाषिता ।
स्वयं हन्यात् षड़ब्दं स्यात् निमित्ते [1]रद्धमीरितम् ॥
गृहदाहादिभिः पापी कृत्वा तद्द्विगुणं चरेत् ।
तदर्द्धं वड़वायाश्च तदर्द्धं गर्भमोचने ॥
शिशौ पौगण्डके चैव वड़वार्द्धं समाचरेत् ।

महानारदीये—

जनभङ्गे महारण्ये स्वगृहे यदि पूर्व्वजः ॥
दिवाजननभीत्यात्तु हयं [2] हन्यान्निमित्तजैः ।
महान्तं नरकं गत्वा यमपाशनिबन्धनम् ॥
पुनर्भवमुपागम्य जायते ग्रन्थिमान् सदा ।
बालं पौगण्डकं वापि युवानं यदि कामतः ॥

१ वधमीरितम इति क्कोतपुस्तकपाठ ।

२ स्वयं इति क्कोतपुस्तकपाठ ।

अश्वं हन्याद् द्विजो यस्तु प्रायश्चित्ती भवेत्तदा।
कुर्य्यात्तत्कर्म्मशुद्ध्यर्थं षड़ब्दं कृच्छ्रमादरात्॥
वड़वायामर्द्धमुक्तं तदर्द्धं बालमारणे।
गृहे दाहादिभिश्चार्द्धं तदर्द्धं गर्भमोचने॥
राजा यो यदिमं हन्याद् युद्धादन्यत्र वाजिनम्।
स राजा नरकं गत्वा व्याधियुक्तो भवेद्भुवि॥
तस्यैव निष्कृतिर्दृष्टा विप्रस्यार्द्धं मनीषिभिः।
विप्रस्तु राजवत्प्रोक्तं शूद्रो दण्ड्यो यथाविधि॥

तत्तत्स्त्रीणां तत्तदर्द्धक्रमेण योजनीयम्। शूद्रान् पूर्व्ववद् दण्डयेत् शतरूप्यकं वा हस्तच्छेदो वा इति सर्व्वत्राध्याहारः। राज्ञा स्वोपरिपातने वधः कर्त्तव्यो नान्यथा।

मार्कण्डेयपुराणे—

अश्वयुद्धे तु[1] संप्राप्ते स्वयमारुह्य वाजिनम्।
यदा हन्यादयं तत्र नान्यथा दोषसम्भवः॥
प्रायश्चित्तमिदं कृत्वा शुद्धिमाप्नोत्यनुत्तमाम्।

इति हेमाद्रौ अश्ववधप्रायश्चित्तम्।

(1) अश्वयुद्धे यदा प्राप्ते इति क्रोतपुस्तकपाठः।

## अथ उष्ट्रवधप्रायश्चित्तमाह ।

स्कन्दपुराणे—

पट्टने च वने राजन् प्रमादाद्वा क्रमेलकम् ।
उपायैर्हननैर्योग्यैर्मेलयित्वा महात्मभिः ॥
हत्वा पश्चात्तदा ज्ञानाद्रौरवं नरकं व्रजेत् ।
तदन्ते भुवमासाद्य वक्राङ्गो जायतेऽधुना ॥
तद्दोषपरिहारार्थं प्राजापत्यव्रतं चरेत् ।

एतत्सहायमात्रेऽप्युक्तम् । स्वयं हनने विशेषमाह ॥

ब्रह्माण्डपुराणे--

उष्ट्रं ज्ञात्वा द्विजो हन्याद् दण्डाद्यैर्गलपीड़या ।
यमलोकमुपागम्य भुक्त्वा तत्रैव यातनाः ॥
ततोऽपि भुवमासाद्य जायते पक्षघातवान् ।
तद्दोषपरिहारार्थमब्दं कुर्य्यात् प्रयत्नतः ॥
पौगण्डे तच्छिशावर्द्धं तदर्द्धं गर्भमोचने ।
क्षत्रियो यदिमं हन्यात् क्रमेलकमधर्म्मतः ॥
अधर्म्मो नाम तद्राज्ञां युद्धादन्यत्र उच्यते ।

नारदीये—

युद्धादन्यत्र योराजा दण्डाद्यैर्बहुभिर्यदा ।
क्रमेलकं हनेद्यत्र अरण्ये निर्ज्जने तथा ॥
ग्रामे वा कारणं त्यक्त्वा शस्त्राद्यैर्भृत्यचोदितैः ।
स गत्वा नरकं पापी पशुहन्ता भवेद्भुवि ॥

कारणं युद्धमेव पूर्व्वोक्तम्।

तद्दोषपरिहारार्थं कायकृच्छ्रं विशोधनम्।
विप्रस्तु तत्तथा प्रोक्तं पूर्व्वमत्रविचक्षणैः॥
हन्याच्चेद्वृषलो राजा दण्डयेत् तं न मारयेत्[1]।
तत्तत्स्त्रीणां तदर्द्धं स्यात् तावदर्द्धं प्रचोदितम्॥
[ शिशौ पौगण्डके यूनि तदर्द्धं गर्भविप्लवे ]।

इति हैमाद्रौ प्रायश्चित्तखण्डे[2] उद्गवधप्रायश्चित्तम्।

---

(१) शूद्रोहन्याच्च तं राजा दण्डयेन्नतु मारयेत् इति क्रीतलेखितपुस्तकपाठः।

[—] अयमधिकः पाठः काशीपुस्तके दृश्यते।

(२) प्रायश्चित्तखण्डे इति क्रीतलेखितपुस्तकयोर्नोपलभ्यते।

# अथ खरहननप्रायश्चित्तम् ।

मार्कण्डेयपुराणे—

पशुबुद्ध्या खरं हत्वा विप्रो निशि महापथे ।
पश्चाज्ज्ञात्वा खर इति निमित्तैर्वा दुरात्मभिः ॥
स एव नरकस्थायी यावदाभूतसंप्लवम् ।
पश्चाद्भवति चाण्डालो भुवमासाद्य भूमिप ॥

राजविजये—

अज्ञात्वा पापबुद्ध्या यो विप्रो हन्यात् खरं मुदा ।
निमित्तैः सङ्गदोषाद्वा महार्यैर्जनचो[1]दितैः ॥
अन्धकारे महाघोरे पश्चाज्ज्ञात्वा महान् खरः ।
इति मत्वा स पापीयान् लब्ध्वा दोषं महत्तरम् ॥
चाण्डालत्वमवाप्नोति त्रिषु जन्मसु भूमिप ।
न हिंस्यान्मृगचाण्डालं कर्म्मणा मनसा गिरा ॥

कूर्म्मपुराणे—

विप्रस्तु मृगचाण्डालं न हिंस्यात् कामकारतः ।
निमित्तैरथवा चान्यैः महार्यैर्हननोद्यतैः ॥
सोऽनुभूय महत्पापं मातङ्गत्वमवाप्नुयात्[2] ।
तस्यैव निष्कृतिर्दृष्टा मुनिभिर्ब्रह्मवादिभिः ॥
स्वयं हत्वा तु चान्द्रं स्यात् पराकः सहसङ्गतः ।
निमित्तैर्यावकं प्रोक्तमङ्गीकारे सुवर्च्चसम् ॥

---

१ जनतोर्चितं इति क्वचित्पुस्तकपाठः ।

२ अवाप्यते इति लिखितपुस्तकपाठः ।

"सुवर्च्चमं" पञ्चगव्यम्[1]।

राजा हन्यात् खरं मोहात् भृत्यैर्वास्तैः प्रमादतः[2]।
तस्य देहविशुद्ध्यर्थं पराकः परिकीर्त्तितः॥
विप्रस्तदेव योक्तव्यं प्रयत्नेन नृपोत्तम।
शिशौ पौगण्डके चैव राजाऽर्द्धं परिकल्पयेत्॥
राजा तदेव[3] कुर्व्वीत राजवत्सवणिक्पतिः।
तत्स्त्रीणान्तु तदर्द्धार्द्धं योजनीयं विचक्षणैः॥
शूद्रो दद्याच्छतं रूप्यं न वधो मुनिभिः स्मृतः।

रासभभेदेन प्रायश्चित्तमेवं योजनीयम्। तस्य पौगण्डकौमाराद्यपि पूर्व्वमुक्तम् तत्तत्तारतम्यहननप्रायश्चित्तं यथायथं योजनीयम्। रासभभेदा बहवः सन्ति तेषां मध्ये बहुसञ्चारतया प्रवर्त्तमानएव ग्राह्यः।

इति हेमाद्रौ खरहननप्रायश्चित्तम्।

(१) अयं पाठः लेखितपुस्तके नास्ति।
(२) प्रमादजैरिति क्रीतलेखितपुस्तकपाठः।
(३) मदैव इति क्रीतपुस्तकपाठः।

## अथेदानीं महिषी[1]हननप्रायश्चित्तमाह ।

लिङ्गपुराणे—

[2]महिषीं यो द्विजोराजा वणिग्वा शूद्रएव वा ।
हन्याद्दण्डादिभिः क्रूरैर्निमित्तैरुत वा स्वयम् ॥
स महानरकं याति कालसूत्रं सुदारुणम् ।
तदन्ते भुवमासाद्य लालालपनवान् भवेत् ॥
*महिषीमास्यजो यस्तु बाहुजोरुजपादजाः ।
गृहदाहादिभिर्वान्यै[3] र्निमित्तैर्बहुभिर्यदा ॥
घ्नन्ति भृत्यैः स्वयं पलग्ना तत्रैव निरयं गताः ।
महान्तं नरकं गत्वा ते लालावदनाऽभवन् ॥

शिवधर्म्मोत्तरे—

राजपुत्त्रोवणिग्वापि मुखजः पादसम्भवः ।
वनमध्ये जले गेहे महिषीं यदि यत्न,वै ॥
विहिंसन्ति तदा क्रूराः प्रविशन्ति च [4]काननम् ।
पुनर्भुवमुपागम्य आर्द्रास्याः सम्भवन्ति ते ॥
तद्दोषशमनायालं महासान्तपनं विदुः ।
पञ्चगव्यविधानेन पञ्चगव्यं पिवेत्ततः ।

---

(१) महिषहनन इति लेखितपुस्तकपाठः ।
(२) महिषं इति लेखितपुस्तकपाठः ।
* कूर्म्मपुराणे—इत्यधिकः पाठः लेखितपुस्तके दृश्यते ।
(३) राजा इति क्वचिल्लेखितपुस्तकपाठः ।
(४) च काननाम् इति लेखितपुस्तकपाठः ।

शुद्धिमन्तस्तथाभूवन् नान्यथा शुद्धचेतसः॥
साचेद्भवेद्[1] बालवत्सा तद्धिंसायां नराधिप।
विप्रः कुर्य्यात् तदा ज्ञात्वा महासान्तपनद्वयम्॥
राजा सान्तपनं कुर्य्यादूरुजः क्षत्रियार्द्धतः।
पादजः पादमात्रञ्च प्रायश्चित्तं यथाक्रमम्।
तत्तत्स्त्रीणां तत्तदर्द्धं प्रायश्चित्तमुदीरितम्॥

बालपौगण्डकौमारादीनि पूर्व्ववद् विचारणीयानि। स्वयं हनने पूर्णं प्रायश्चित्तम्। पित्रादीनां? गृहदाहादिभिर्मृता यदि तदा अर्द्धं प्रायश्चित्तम्। अस्मन्महिषीत्युपेक्षया प्रायश्चित्तमकुर्व्वाणः पूर्व्वमुक्तं नरकं भुक्त्वा नीचतमोभवति दोषबाहुल्यात् प्रायश्चित्तमपि[2] बलीयः। वर्णत्रये पञ्चगव्यमपि।

इति हेमाद्रौ महिषीवधप्रायश्चित्तम्।

---

१) साचेत् तन्वी इति क्रीतलेखितपुस्तकपाठः।
२) प्रायश्चित्तमाचरणीयम् इति क्रीतपुस्तकपाठः।

## अथ महिषवधप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

महिषं कामकारेण रज्जुदण्डाश्मपातनैः।
योविप्रोवनमध्ये वा गृहदाहे जलाप्लवे॥
निहन्यादुष्टसङ्गाद्वाऽप्यन्धकारे निरन्तरे।
स विप्रोनिधनं गत्वा महत्पापमवाप्नुयात्[१]॥
भुवं पुनरुपागम्य जायते भिल्लजन्मवान्।

कूर्म्मपुराणे—

महिषं पूर्व्वजोयेन दोषेण महताव्रतः॥
हत्वा निमित्तैर्बहुभिर्भृत्यवर्गैरथापि वा।
अरण्ये गृहदाहे वा कृषिकाले जलोद्भवे॥
महान्तं नरकं गत्वा भुक्ता[२] तत्रैव यातनाः।
पुनर्गत्वा स जगतीं भिल्लजन्म समश्नुते॥

लिङ्गपुराणे—

महिषं कृषिकाले तु ताड़नैरश्मपातनैः।
गृहे वा गृहदाहे वा योहन्यात् पूर्व्वजोरुषा।

---

१) अवाप्यच इति लेखितपुस्तकपाठः।

२) मुक्ता इति लेखितपुस्तकपाठः।

मृत्वाऽनुभूय नरकं म्लेच्छोभवति भूतले ।
तस्यैव निष्कृतिरियं सृष्टा मुनिपरायणैः ॥
अज्ञानात्तप्तकृच्छ्रं स्यात् प्राजापत्यं निमित्ततः ।
परप्रेरणया वापि ज्ञात्वा वा द्विगुणं चरेत् ॥
बाले पादश्च पौगण्डे अर्द्धं यूनि प्रपूर्णता ।
राजा वणिक् पादजो वा कारणैर्वा [1]निपातनैः ॥
भारदाह[2]निमित्ताद्वा निम्नोन्नतमहापथैः ।
महिषं दण्डपातैर्वा हन्याद्यदिह पातकी ॥
नरकं चानुभूयाथ म्लेच्छजातिरभूत्तदा ।
अकामतस्तप्त[3]कृच्छ्रं प्राजापत्यं निमित्ततः ॥
ज्ञात्वा तद्विगुणं प्रोक्तं बाले पादं विशोधनम् ।
पौगण्डेऽर्द्धं तदाज्ञेयं यूनि पूर्णमतःपरम् ॥
बाहुजोरुजयोरेवं प्रायश्चित्तं विशोधनम् ।
पादजे पादकृच्छ्रं स्यात् तत्तत्स्त्रीणां तथा पृथक् ॥
[4]अर्द्धार्द्धधनमानेन योजनीयं यथाक्रमम् ।
विप्रस्तु महिषं हत्वा भिल्लोवा जायते तथा ॥
राजा च पौक्कसो भूयात् वणिग्वैणवजातिमान् ।
शूद्रः सङ्करनामिति महिषोजायते वने ॥

(१) वापि पातनैरिति काशीलेखितपुस्तयो पाठ ।
(२) भारवाहनिमित्ताद्वा इति क्रीतपुस्तकपाठः ।
(३) तदा कृच्छ्रं इति लेखितपुस्तकपाठः ।
(४) अर्द्धार्द्धेन च मानेन इति क्रीतपुस्तके पाठः ।

तत्तन्नारी तथा भूयात् तद्दोषात्तत्परिग्रहः ॥

अतोन हिंस्यान्महिषं विप्रोवा राजवल्लभः ॥

इति हेमाद्रौ प्रायश्चित्तखण्डे महिषवधप्रायश्चित्तम् ।



## [1]अजवधप्रायश्चित्तमाह ।

महाराजविजये—

अजं वस्तं द्विजो हन्यात् कारणेन विना नृप ।
नरकं चानुभूयाशु ततः शुनो[2] भवेत् कलौ ॥

लिङ्गपुराणे—

ब्राह्मणो निर्निमित्तेन वस्ताजौ निहनेत्तथा ।
नरकं कालचक्रन्तु ह्यनुभूय महत्तरम् ॥
पुनःक्ष्मामुपगम्याशु सूनुर्भवति पूर्व्वजः ।
यज्ञार्थं [3]हन्ति यो विप्रो [4]ह्यनन्तं फलमश्नुते ॥

गौरीकाण्डे—

यज्ञार्थं हन्ति योविप्रो अजं मेषं सुपुण्यधीः ।
स याति ब्रह्मणः स्थानं पुनरावृत्तिदुर्लभम् ॥
कारणेन विना राजन् अजं वस्तं न हिंसयेत् ।
योविप्रोधर्म्ममुल्लङ्घ्य पापमेतत् समाचरेत् ॥
स याति नरकं घोरं शुन[5]जन्माभवेदिह ॥

कूर्म्मपुराणे—

यागार्थं हन्ति योविप्रः अजं लोकपरायणः ।
सयाति ब्रह्मसदनं ब्रह्मणा सहमुच्यते ॥

---

(१) वस्तवधप्रायश्चित्तमिति लेखितपुस्तके पाठः ।
(२) सूनुर्भवेदिति क्रीतपुस्तके पाठः ।
(३) यदि यो विप्रः इति लेखितपुस्तके पाठः ।
(४) अनन्तफलमश्नुतेइति क्रीतपुस्तके पाठः ।
(५) शुनोजन्मभवेदिह इति क्रीतपुस्तकपाठः ।

वस्तं वापि हनेद्यस्तु स यातीन्द्रपदं शुभम्[1] ।
यागार्थं हिंसनं प्रोक्तं द्वयोर्ब्रह्मविसृष्टयोः ॥
निष्कारणेन तं हन्यात् यमलोकं सुदारुणम् ।
गत्वा भुवमुपागम्य सूनुर्भवतिचाचयः ॥
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ।
[2]सङ्गाद्वा यदिगत्वा तु निमित्तैर्यदि हिंसयेत् ॥
प्राजापत्यं तथाकुर्य्यात् तथैवाजवधे नृप ।
प्राजापत्यं भुवोभर्त्तावणिक्कुर्य्यात्तथैव च ॥
शूद्रै[3]र्भिक्षाप्रकर्त्तव्या तत्तत्स्त्रीणां तदर्द्धकम् ।
बालपौगण्डयूनां यथाक्रमेण[4] प्रयोजनीयम् ॥

इति हेमाद्रौ प्रायश्चित्तखण्डे अजवधप्रायश्चित्तम् ।

---

(१) स याति परमं पदं इति क्रीतकाशीपुस्तकपाठः ।
(२) सङ्गत्या यदि इति क्रीतकाशीपुस्तकपाठः ।
(३) शूद्रैर्भिक्षा प्रकर्त्तव्या इति क्रीतपुस्तकपाठः ।
(४) यथाक्रमं इति क्रीतपुस्तकपाठः ।

## अथ द्रुमच्छेदप्रायश्चित्तमाह ।

गौरीकाण्डे —

> इन्धनार्थं द्रुमच्छेदी ग्रामे वाऽरण्यमध्यतः ।
> कृष्यर्थं वा नरश्रेष्ठ स याति नरकं ध्रुवम् ॥

एतत्साधारणवृक्षविषयम् । यज्ञियवृक्षच्छेदने विशेषमाह कूर्मपुराणे —

> वैकङ्कतश्च खदिरः किंशुकस्तम्ब[1] एव च ।
> उदुम्बरश्च न्यग्रोधः शमो विल्वस्तथैव च ॥
> [2]श्लेष्मातकश्च सरलएते [3]यज्ञीयवृक्षकाः ।
> चूतश्च तिंत्रिणीवृक्षः कपित्थामलकौ तथा ॥
> कोविदार[4]तरुश्चैव निम्बवृक्षोमधुद्रुमः ।
> जम्बूतरुर्नदीवृक्षः अशोकतरुरेव च ॥

एते[5] वन्याः ।

> चम्पकः पनसश्चैव [6]मातुलङ्गोऽर्ज्जुनस्तथा ।
> जम्बीरैरण्डवृक्षश्च [7]नारिकेलश्च खर्ज्जुरः ॥

(१) स्तम्भएव च इति लेखितपुस्तकपाठः ।

(२) श्लेष्मान्तकश्च इति लेखितपुस्तकपाठः ।

(३) यज्ञियवृक्षकाइति क्रीतपुस्तकपाठः ।

(४) कोविदारतरुश्चैव इति लेखितपुस्तकपाठः ।

(५) ते वन्या इति लेखितपुस्तकपाठः क्रीतपुस्तके तु अयमंशोनोपलभ्यः ।

(६) मातुलिङ्ग इति क्रीतपुस्तकपाठः ।

(७) नारीकेल इति क्रीतपुस्तकपाठः ।

दाडिमीवदरीवृक्षः कुरण्टकचिरण्टकौ ।
गुञ्जावृक्षश्च[1] वकुलो नीपवृक्षस्तथैव च ॥

एते ह्यारामजाः—

भल्लातको वृहत्पर्णो ये ये वृक्षा महोन्नताः ।
तथैव नीचवृक्षा ये फलवन्तश्च पुष्पिताः ॥
वन्य[2]वृक्षा अमी राजन् एतेषु यदि हिंसनम् ।
तस्यैव तारतम्येन प्रायश्चित्तमिहोच्यते ॥
कृष्यर्थं यज्ञपात्रार्थं यश्छिन्द्यात्कुलजं सकृत् ।
तस्यैव निष्कृतिरियं कथिता मुनिसत्तमैः ॥
इन्धनार्थं द्रुमच्छेदी तस्य दोषोपशान्तये ।
प्राजापत्यं सकृत् कृत्वा शुद्धिमाप्नोत्यनुत्तमाम् ॥
कृष्यर्थं वृक्षहा पापी प्राजापत्यद्वयं चरेत् ।
कृष्यर्थमिन्धनार्थं वा यज्ञवृक्षविभेदने ॥
पराकं तत्र कुर्वीत शुद्धोभवति वृक्षहा ।
वैकङ्कतस्य[3] विच्छेदी प्राजापत्यं समाचरेत् ॥
खदिरे किंशुके चैव पराकः शुद्धिरीरितः[4] ।
उदुम्बरे च न्यग्रोधे पराकात् पूर्ववच्छुचिः[5] ॥

---

(१) गुञ्जावृक्षौ च वकुलौ नीपवृक्ष इति क्रीतपुस्तकपाठः ।
(२) अन्यवृक्षा इति क्रीतपुस्तकपाठः ।
(३) वैकङ्कतं च विच्छेदी इति क्रीतपुस्तकपाठः ।
(४) शुद्धिरीरिता इति क्रीतपुस्तकपाठः ।
(५) शुद्धिरिति लेखितपुस्तकपाठः ।

विल्वाश्वत्थौ यदा भिन्द्यात् तदा चान्द्रायणं चरेत् ।
श्लेष्मान्तके[1] शमीवृक्षे देवदारौ वके[2] तथा ॥
मयूरपादवृक्षे च भेदने तप्तमुच्यते ।
भल्लातके वृहत्पर्णे [3]ये ये च फलपुष्पिताः ॥
तथैव नीचवृक्षा ये तेषां भङ्गे वनेऽपि च ।
प्राजापत्यं वनच्छेदी नीरवृक्ष[4]समा नु ते ॥
[ भल्लातके वृहत्पर्णे कायकृच्छ्रं समाचरेत् । ]
तिंत्रिणीचूतवृक्षे च बहुजन्तूपकारिणि ॥
कपित्थामलकच्छेदे[5] सम्यक् चान्द्रायणं चरेत् ।
[ कोविदारतरौ निम्बे प्राजापत्यं विशोधनम् ॥ ]
मधुद्रुमे जम्बुतके[6] प्राजापत्यञ्च पूर्व्ववत् ।
नदीवृक्षे त्वशोके च पूर्व्ववत् शुद्धिरीरिता ॥
खर्ज्जूरे नारिकेले च तालहिन्तालयोस्तथा ।
तप्तकृच्छ्रं चरेद्विद्वान् छेददोषोपशान्तये ॥

---

(१) श्लेष्मान्तकौ शमीवृक्षे इति लेखितपुस्तकपाठः ।
(२) देवदारुवकास्तथा इति लेखितपुस्तकपाठः ।
(३) कायकृच्छ्रं समाचरेत् इति क्रीतपुस्तकपाठः ।
(४) नीचवृक्षसमा न ते इति क्रीतपुस्तकपाठः ।
अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।
(५) कपित्थामलकच्छेदो इति क्रीतपुस्तकपाठः ।
अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।
(६) जम्बुतकौ इति क्रीतपुस्तकपाठः ।

गौतमः,—

दुष्टान्नं यो द्विजोभुंक्ते[1] पूर्व्वमुक्तं मनीषिभिः ।
[2]पश्चात्स देहशुद्ध्यर्थं पराकं कृच्छ्रमाचरेत् ॥

एतत्सगोत्रबालभोजनविषयमपि, भगिनीपुत्रादिसहभोजने पुत्रौ-पुत्रादिसह[3]भोजनाद् द्विगुणं, विधवा-ब्रह्मचारि-यतीनां पूर्व्ववत् ।

इति हेमाद्रौ उच्छिष्टान्नभोजन प्रायश्चित्तम् ।

---

(१) भुक्त्वा इति क्रीत-लेखितपुस्तकपाठः
(२) पश्चाद्देहविशुद्ध्यर्थं इति क्रीत-लेखितपुस्तकपाठः ।
(३) सहेति लेखितपुस्तके नास्ति ।

## अथ पत्नीसहभोजनप्रायश्चित्तमाह ।

देवलः—द्विजः कामातुरो यस्तु पत्न्या सह यदान्नभुक् ।
[1]स विधाय तदा चान्द्रं शुद्धिमाप्नोति पौर्व्विकीम् ॥

पत्न्या सह भोजनकालमाह—

वृद्धमनुः—

महारण्ये च यात्रायां पथि चौराकुले सति ।
असहायो भवेद्विप्रस्तदा कार्य्यं द्विजन्मभिः ॥
एकत्र [2]यानमारोहेत् एकपात्रे तु भोजनम् ।
[3]पत्न्यासह सदा भुक्त्वा विप्रस्तत्र न दोषभाक् ॥
अन्यत्र भोजने स्थाने सहान्तं नरकं व्रजेत् ।
तद्दोषपरिहारार्थं पश्चाच्चान्द्रायणं चरेत् ॥

पराशरः—

एकत्र यान [4]स्यारोहमेकपात्रे तु भोजनम् ।
विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ॥
अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत् ।
अभ्यासे द्विगुणञ्चैव कृत्वा शुद्धिमवाप्नुयात् ॥

इति हेमाद्रौ पत्नीसहभोजनप्रायश्चित्तम्

1 पश्चात चान्द्रायणं कृत्वा इति क्रीत लेखितपुस्तकपाठः ।
2 पात्रमारोहेदिति क्रीत-पुस्तकपाठः ।
3 भार्य्यासह इति क्रीत लेखितपुस्तकपाठः ।
4 यानमारोहेदिति क्रीत-लेखितपुस्तकपाठः ।

## अथ शूद्रभाण्डे भोजनप्रायश्चित्तमाह ।

देवलः—

अतीव तृषितो विप्रो न शूद्रस्योदकं पिबेत् ।
तद्भाण्डभोजनं[1] चैव अज्ञानाद्यदि मानवः ॥
तस्योपनयनं भूयस्तप्तकृच्छ्रेण शुध्यति ।

पराशरः—

शूद्रभाण्डोदकं पीत्वा प्रपायामुदकं[2] तथा ।
शूद्रभाण्डस्थमन्नञ्च भुक्त्वाऽशुद्धः सदा द्विजः ॥
तस्योपनयनं भूयस्तप्तकृच्छ्रं समाचरेत् ।

शङ्खः—

प्रपायां शूद्रभाण्डे वा स्थितं तोयं द्विजः[3] सकृत् ।
अन्नं वा ज्ञानतो भुक्त्वा पुनः संस्कारमाचरेत् ॥
विधवा-ब्रह्मचारि-यतीनां पूर्ववत् ।

इति हेमाद्रौ शूद्रभाण्डे भोजनप्रायश्चित्तम् ।

१ भोजने इति क्वचित् लिखितपुस्तकपाठः ।
२ उदकमिवनात् इति क्वचित्-लिखितपुस्तकपाठः ।
३ द्विजो यदि इति क्वचित्-लिखितपुस्तकपाठः ।

## अथ पतित-दुर्मार्गदुष्टाक्रान्तपङ्क्तौ भोजनप्रायश्चित्तमाह।

देवलः—

पतितश्च खलश्चैव दुर्ज्जनः पिशुनस्तथा।
जारश्च गायकश्चैव निलयाश्चा[1] परस्तथा॥
भिषक् चौरस्तथा मर्म्मी आततायी भयप्रदः।
एते च दुर्ज्जनाः प्रोक्ता अपांक्तेयाः सदैव हि[2]॥
कुण्डश्च गोलकश्चैव अयाज्यानाञ्च याजकः।
चक्राङ्किततनू राजन् तथा लिङ्गाङ्कितोऽपि वा॥
चार्व्वाको दूष[3]कश्चैव उन्मत्तः कितवस्तथा।
एतैराविष्टिता पंक्तिः पापदा सर्व्वदा नृणाम्॥
एतस्यामन्नभुग् विप्रः पापमेव समाश्रयेत्।
एकत्र भोजने राजन् चान्द्रायणमथाचरेत्॥
[ मासभोजी महापापी चान्द्रं पाराकमाचरेत् ][4]।
वर्षभोजी महाचान्द्रं कृत्वा शुद्धिमवाप्नुयात्॥
विधवा-ब्रह्मचारि-सन्यासिनां पूर्व्ववद्द्विगुणम्।

इति हेमाद्रौ पतितादि दुष्टाक्रान्तपङ्क्तौ भोजनप्रायश्चित्तम्।

१ यात्रापर इति क्रीत-पुस्तकपाठः।
२ कदाचन इति क्रीत-लिखितपुस्तकपाठः
३ दूषण इति कृतपुस्तकपाठः
४ इदमर्द्धं कृत-काशीपुस्तकयोर्नास्ति

## अथ करमथिततक्रपान(१)-पलाण्डु-लशुन-गृञ्जनादि-भक्षणप्रायश्चित्तमाह ।

लशुनं गृञ्जनं तक्रं (२)पाकं विलयनं तथा ।
(३)नैव भोज्यं ब्राह्मणेन जग्ध्वा पापं समश्नुते ॥

गृञ्जनं कामवृद्ध्यर्थं पर्णचूर्णं करमथितं तक्रम् । विलयनं घृतमलम् । पाकं कारीषोपरिजातं छत्रम् । एतानि विप्रैर्नभोक्तव्यानि । तदेवाह

मार्कण्डेयः—

छत्राकं विड्वराहञ्च पलाण्डु ग्रामकुक्कुटम् ।
लशुनं गृञ्जनञ्चैव मत्स्यान् जग्ध्वा पतेद्द्विजः ॥
ज्ञात्वा भुक्त्वा तु चान्द्रं स्याद् अज्ञानात्तप्तमीरितम् ।
सकृदेव द्विजो (४)ऽश्याचचेद् बहुवारं दिराव्रतम् ।
अब्दादूर्द्धं महापापी पतितः स्यान्नसंशयः ।

विधवा-ब्रह्मचारिणां पूर्व्ववत् ।

इति हेमाद्रौ करमथिततक्रपानादिभक्षणप्रायश्चित्तम् ।

(१) पानेतिपदं कौन-पुस्तके नास्ति ।
(२) पलाण्डु इति कौन-लिखितपुस्तकपाठः ।
(३) पाकान्यान्ज्ञः इति लिखितपुस्तकपाठः ।
(४) अश्नीयात् इति कौन लिखितपुस्तकपाठः ।

## अथ श्वेतवृन्ताक-रक्तशिग्रु-वृन्तालालावु-कतक-कालिङ्ग विल्वौदुम्बरादिभक्षणप्रायश्चित्तमाह ।

देवल:—

वार्त्ताकु कतक-कालिङ्गविल्वौदुम्बरभिःमटाः[१]

यस्य कुक्षौ प्रवर्त्तन्ते तस्य दूरतरो हरिः ॥

वृन्तालालावुरक्तशिग्रु-श्वेतवृन्ताकमेव च ।

[१]भक्षयेद् ब्राह्मणो यस्तु स तु चान्द्रायणं चरेत् ॥

यति-ब्रह्मचार्य्यादीनां पूर्व्ववत् ।

इति हेमाद्रौ श्वेतवृन्ताक-रक्तशिग्रुवृन्तालालावु-कतककालिङ्ग-विल्वौदुम्बरादिभक्षणप्रायश्चित्तम् ।

---

(१) भक्षयित्वा द्विजोयस्तु इति लेखितपुस्तकपाठः ।

अथ ताम्रपात्रस्थितगव्यभक्षणे प्रायश्चित्तमाह ।

देवलः—

> ताम्रपात्रस्थितं दुग्धं गोमूत्रं तक्रमेव वा ।
> दधि वा ताम्रपात्रस्थं नारिकेलोदकं तथा ॥
> द्विजः पीत्वा सुरापानं कृतवान्नात्र संशयः ।
> अज्ञानाज्[1] ज्ञानतो वापि सुरापानसमं विदुः ॥

मार्कण्डेयः—

> गव्यं मूत्रं तथा तक्रं नारिकेलोदकं तथा ।
> ताम्रपात्रस्थितं [2]पीत्वा पयोलवणसंयुतम् ॥
> द्विजः कामात् [3]सुरापी स्याद् अज्ञानाच् चान्द्रभक्षणम् ।
> कृत्वा शुद्धिमवाप्नोति मद्याऽऽघ्राणे तथैन्दवम्[4] ॥

पराशरः—

> नालिकेरोदकं कांस्यपात्रस्थं गव्यमेव च ।
> लवणाक्तं पयश्चैव [5]पीत्वाऽऽघ्राय सुरां तथा ।
> द्विजो ज्ञानात् चरेच्चान्द्रं [6]पीत्वाऽज्ञानात्प्रजापतिम् ।
> अन्यथा दोषमाप्नोति नरकञ्चाधिगच्छति ॥

---

(१) अज्ञानज्ञानतो वा इति क्रीतपुस्तकपाठः ।

(२) कृत्वा इति लेखितपुस्तकपाठः ।

(३) सुरापानं इति क्रीत-लेखितपुस्तकपाठः ।

(४) मद्याघ्राणे तथैव च इति क्रीत-लेखितपुस्तकपाठः ।

(५) ज्ञात्वा इति लेखितपुस्तकपाठः ।

(६) पिबन् इति क्रीतपुस्तकपाठः ।

यमः—

नाम्रपात्रस्थितं गव्यं नालिकेरोदकं तथा ।
लवणाक्तं पयश्चैव मद्यगन्धं तथैवच ॥
पीत्वा द्विजश्चरेच्चान्द्रं प्राजापत्यमकामतः ।

तथा घ्राणे विशेषमाह—

देवलः—

हिन्ताल-तालखर्ज्जूर-नारिकेलवने चरन् ।
दैवाद् वायुवशात् प्राप्तं घ्रात्वा विप्रस्य दक्षिणम् ॥
हस्तमाघ्राय सहसा शुद्धिमाप्नोति तत्क्षणात् ।
अभावे भास्करं पश्येत् स्पृष्ट्वा कर्णं जपेद्धरिम् ॥

दैवात् [1]मद्यगन्धं वायुवशात् प्राप्तं घ्रात्वा पश्चात् विप्रस्य दक्षिण-हस्तमाघ्राय शुध्यति ।

अभावे मार्त्तण्डं पश्यन् स्वस्य दक्षिणश्रवणं स्पृष्ट्वा हरिं मनसि स्मरन् शुध्यति । ततः परं नासिकां पिधाय गच्छेत् । विप्रस्या-दीनामेवम् ।

इति हेमाद्रौ ताम्रपात्रस्थगव्यादिभक्षणप्रायश्चित्तम् ।

(१) मद्यगन्धशाकपरिष्कृतगन्ध इति नैमिषपुस्तकपाठः मद्यगन्ध शाक परि-ष्कृतवायुवशात् इति क्रीतपुस्तकपाठः ।

## अथ पीतोदकशेषपानप्रायश्चित्तमाह ।

देवलः—

विप्रस्य पीतशेषं यत् तोयमन्यः पिबेद् यदि ।
मद्यपानसमं प्राहुस्तत्तोयं [1]मुनिपुङ्गवाः ॥

व्यासः—

पीतशेषं द्विजः पीत्वा सुरापानसमं जलम् ।
[2]तथा ज्ञानाद्द्विजः कुर्य्यात् प्राजापत्यं विशुद्धये ॥

गौतमः—

एकपंक्त्युपविष्टानां विप्राणां पात्रसंस्थितम् ।
पीतशेषजलं पीत्वा विप्रः कुर्य्यात् प्रजापतिम् ॥
एतेन शुद्धिमाप्नोति न शुध्यत्यन्यथा द्विजः ।[3]

पीतशेषमपि तोयं किञ्चिद्भूमौ निक्षिप्य पाने न दोषः तदाह—

मार्कण्डेयः—

पात्राभावे जलाभावे पीतशेषं द्विजः पिबेत् ।
भूमौ किञ्चिन्नि[4]पात्यादौ पीत्वाविप्रोन दोषभाक् ॥

गौतमः—

पीतशेषं विषं विप्रः पातुमिच्छंस्तृषातुरः ।
भुवि किञ्चिज्जलं क्षिप्त्वा पीत्वा तत्र विशुध्यति ॥

(१) मुनिपुङ्गवैरिति लेखितपुस्तकपाठः ।
(२) पीत्वा इति क्रीत-लेखितपुस्तकपाठः ।
(३) पीत्वा इति क्रीतपुस्तकपाठः ।
(४) निपात्यादौ इति क्रीत लेखितपुस्तकपाठः ।

एतत् पृथक्पात्राभावविषयम्। पात्रे विद्यमाने सति स्वपात्रस्थोदकमेव पिबेत्। नान्यत्।

यमः—

आसनं शयनं वस्त्रं जायाऽपत्यं कमण्डलुः।
आत्मनः [1]शुचिरेतानि परेषामशुचिर्भवेत्॥

अतः स्वपात्रस्थोदकमेव समीचीनम्। अभावे पूर्व्वोक्तं कृत्वा शुध्यतीत्यर्थः।

इति हेमाद्रौ पीतशिष्टोदकपानप्रायश्चित्तम्।

---

(१) शुद्धिरिति क्रीतपुस्तकपाठः।

## अथ खरोष्ट्रहरिणीमृतवत्सगवीक्षीरपानादि प्रायश्चित्तमाह ।

उष्ट्रक्षीरं मृगक्षीरं सान्धिन्यं यामलं तथा ।
मुखेनोदकपानञ्च मृतवत्सापयस्तथा ॥
[1]पिबेद् द्विजः सकृन्मोहाद् [2]यदि वा महिषीपयः ।
तस्योपनयनं भूयस्तप्तकृच्छ्रं विशोधनम् ॥

मृतवत्सापयः (मृतवत्सायागोः पयः) मुखेनोदकपानं [3]हस्तेन विनेत्यर्थः ।

मार्कण्डेयः—

मृतवत्सापयः पीत्वा मुखे पीत्वा जलं द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

गौतमः—

मृतवत्सापयः पीत्वा मुखे पीत्वा जलं द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

गौतमः—

सान्धिन्यं यामलं दुग्धमुष्ट्रक्षीरञ्च मार्गजम् ।
खरोष्ट्रयोः पयः पीत्वा पुनः संस्कारमर्हति ॥
पश्चाद्देहविशुद्ध्यर्थं तप्तकृच्छ्रं समाचरेत् ।
एतेन शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥

(१) पीत्वा इति क्रीत-लिखितपुस्तकपाठः ।
(२) केवलं इति लिखितपुस्तकपाठः ।
(३) हस्तेन इति क्रीत-लिखितपुस्तके नास्ति ।

प्रजापतिः —

खरोष्ट्रयोश्च मान्विन्यं यामलं मार्गजं तथा ।
[1]केवलं महिषीदुग्धं द्विजः पीत्वा पतत्यधः ॥
तस्योपनयनं भूयस्तप्तकृच्छ्रेण शुध्यति ।

विधवानां [2]ब्रह्मचारिणां सन्यासिनाञ्च पूर्व्ववद्दिगुणं प्रायश्चित्तं वेदितव्यम् । औषधार्थं खरोष्ट्रयोः क्षीरपाने तप्तकृच्छ्रमात्रं न पुनः संस्कारः ।

तदाह ।

गौतमः—

औषधार्थं द्विजः पीत्वा दुग्धं खर-क्रमेलयोः ।
तप्तकृच्छ्रं चरेत् पश्चात् पुनःकर्म्म न गौरवात् ॥

इति हेमाद्रौ उष्ट्रक्षीरादिपानप्रायश्चित्तम् ।

---

(१) केवलां इति लिखितपुस्तकपाठः ।
(२) ब्रह्मचारि सन्न्यासिना इति लिखितपुस्तकपाठः ।

अथ मनुष्य-मृग-पक्ष्यादिमल-मूत्रभक्षणप्रायश्चित्तमाह ।

देवलः—

मनुष्यस्य खरस्याऽपि सूकरस्य द्विजन्मनः ।
मलमूत्रं पिबेद्यस्तु रेतोवा रोगपीड़ितः ॥
[1]स तु पश्चात् पुनःकर्म्म [2]कृत्वा कृच्छ्रेण शुध्यति ।
अज्ञानात् शुद्धिमाप्नोति ज्ञात्वा चान्द्रायणं चरेत् ॥

एतदनातुरविषयम् । आतुरविषये विशेषमाह ।

गौतमः—

आतुरोरोगमुक्त्यर्थं खरमानुषसूकराः ।
एतेषां मलमूत्रञ्च पीत्वा दोषमवाप्य[3] च ॥
रोगान्ते देहशुद्ध्यर्थं तप्तकृच्छ्रं चरेत् सुखी ।
अनातुरः पुनःकर्म्म कृत्वा शुद्धिमवाप्नुयात् ॥

जावालिः—

द्विजः पीत्वा मलं मूत्रं खरमानुषयोः किटेः[4] ।
[5]अगदोदेहशुद्ध्यर्थं पुनःकर्म्मपुरःसरम् ॥
तप्तकृच्छ्रं चरेत् सम्यक् रोगी तप्तं समाचरेत् ।
एतेन शुद्धिमाप्नोति न चान्यैः कर्म्मभिर्द्विजः ॥

---

(१) द्विज इति क्रीत-लेखितपुस्तकपाठः ।

(२) तप्तकृच्छ्रेण इति लेखितपुस्तकपाठः ।

(३) अवाप्य ते इति क्रीत-लेखितपुस्तकपाठः ।

(४) किल इति काशी-पुस्तकपाठः ।

(५) अगदे इति लेखितपुस्तकपाठः ।

यमः—

द्विजोऽश्नानान्मलं मूत्रं खरमानुषयोः किटेः ।
मयूरहंसगृध्राणां सकृद्भुक्का तु पातकी ॥
पुनःकर्म्म प्रकुर्व्वीत तप्तकृच्छ्रं विशोधनम् ।
रोगिणोन पुनःकर्म्म कृच्छ्रमात्रमुदीरितम् ॥
सुखी भूत्वा पिबेद्गव्यं नारीणामर्द्धमीरितम् ।
यतीनां ब्रह्मचारिणां विधवानां दिरावृत्तम्[1] ॥

इति हेमाद्रौ मानुषखरसूकरादिमलमूत्रभक्षणप्रायश्चित्तम् ।

---

(१) द्विरावृत्ते इति क्रीतपुस्तकपाठः ।

[ अथ अस्थिचर्म्मपक्षिलोमकेशमलोपहतशाकान्न-
भोजनप्रायश्चित्तमाह । ]

देवल:— शाकमध्येऽन्नमध्ये वा दन्तकेशनखा मलम् ।

अस्थिचर्म्म द्विजस्याङ्गरोमकीटनखायदा ॥

बह्वन्नं न परित्याज्यं स्वपात्रस्थं परित्यजेत् ।

अन्नप्रमाणमाचाराध्याये द्रव्यशुद्धिप्रकरणेऽभिहितम् ।

[[१]अतोऽल्पे विशेषमाह]

गौतम:— अल्पेऽन्ने शाकमध्ये वा दधिक्षीरादिषु द्विजा: ।

दन्तकेशनखाविष्ठा मलोलोमास्थि चर्म्म च ॥

कीटाङ्घ्रिकृमयस्तत्र पचनं संपरित्यजेत् ।

स्वपात्रस्थं गृहेचाल्पमुभयं संपरित्यजेत् ।

भुक्त्यनन्तरं शाकोदकपात्रयोर्विद्यमाने तदन्नं छर्द्दयित्वा उपोष्य शुध्यति । छर्द्यभावे घटिकासप्तप्रमाणादौ रात्रिभोजनाद्विरम्य[२] गायत्र्यष्टशतं जप्त्वा पञ्चगव्यं पीत्वा शुध्यति । तदेवाह

मनु:—

ज्ञात्वा तैर्दूषितं भक्तं भुक्त्वा विप्र: प्रसङ्गत: ।

द्विमुहूर्त्तं मुहूर्त्तं वा तदन्नं जीर्णतामगात् ॥

तदन्ते वमनं कृत्वा शुद्धोभवितुमर्हति ।

नोचेत् परद्युरुषसि स्नात्वा जप्त्वा विधानत: ॥

---

[ ] अयं पाठ: क्रीतपुस्तकेनोपलब्ध: ।

[१] अयमपि पाठ: क्रीत-काशीपुस्तकयोर्नोपलब्ध: ।

(२) रात्रिभोजन विरम्य इति क्रीत-लेखितपुस्तकपाठ: ।

अष्टोत्तरशतं पश्चात् पञ्चगव्यं पिबेत्ततः ।
शुद्धिमाप्नोति [१]तत्पापान् न शुद्धस्त्वन्यथा द्विजः ॥

जावालिः—पक्व[२]मल्पं त्यजेच्छाकं अन्नमल्पं त्यजेत्तथा ।
एतैरुपहृतं भुक्त्वा तदानीं छर्द्दिमाचरेत् ॥
जीर्णे परेद्युरुषसि स्नात्वा देवीं जपेच्छतम् ।
ब्रह्मकूर्च्चविधानेन पञ्चगव्यं पिबेत्ततः ॥
एतेन शुद्धिमाप्नोति मृन्मयं तत् परित्यजेत् ।

बहुकेशेषु शाकान्नयोर्म्मध्येस्थितेषु पूर्व्ववत् प्रायश्चित्तम् ।

एकस्मिन् स्थिते विशेषमाह गौतमः—

अन्ने वा [२]पक्वशाके वा केशमात्रे व्यवस्थिते ।
कवले वापि राजेन्द्र कवलं तत्परित्यजेत् ॥
गण्डूषमेकं कृत्वा तु शेषान्नं प्रोक्षयेज्जलैः ।
[३]मृद्भस्म वा क्षिपेत् तत्र पश्चाद् भुक्त्वा न दोषभाक् ॥

मृदं वा भस्म वा इत्यर्थः । अन्यैर्वा नारीभिर्वा स्वपात्रस्थमन्नं प्रोक्षणादिभिः [४]शुद्धं कारयित्वा स गण्डूषमेकं कृत्वा भुक्त्वा न दोषभाक् इत्यर्थः ।

इति हेमाद्रौ चर्म्मादि-नख-मलादिदूषितान्नभोजनप्रायश्चित्तम् ॥

---

(१) राजेन्द्र इति लिखितपुस्तकपाठः ।

(२) पक्वं चाल्पं इति क्रीतपुस्तकपाठः ।

(३) मृद्भस्म इति क्रीत लिखितपुस्तकपाठः ।

(४) शुद्धिमिति क्रीत लिखितपुस्तकपाठः ।

## अथ भोजनकाले दीपनिर्व्वाणप्रायश्चित्तमाह ।

देवलः—

[1]वात्यया दीपनिर्व्वाणे भोजने नाशमाप्नुयात् ।
धृत्वा पात्रं तदा दोर्भ्यां संस्मरन् भानुमव्ययम् ॥
पुनर्दीपागमे तात गायत्र्यान्नं जलैः क्षिपेत् ।
तदन्नमत्यजन् भुक्त्वा शुद्धिमाप्नोति दीपतः ॥
अन्यदन्नं पुनर्भुक्त्वा पञ्चगव्यं पिबेत्तदा ।

पूर्व्वं परिष्कृतमन्नमेव भोक्तव्यं न पुनर्दातव्यम् । भुक्त्वा च शुद्धिमवाप्नुयात् । विधवा-ब्रह्मचारि-यतीनामेवं वेदितव्यम् ।

इति हेमाद्रौ भोजनसमये दीपनाशप्रायश्चित्तम् ।

---

१) दीपं प्रज्वालयन् वात्या इति क्रीत-लिखितपुस्तकपाठः ।

## अथ सूर्य्यसोमोपरागभोजनप्रायश्चित्तमाह ।

देवलः —

सूर्य्यसोमोपरागे च उक्तकालं विना द्विजाः[1] ।
तदन्नं मांसमित्याहुः तद्भुक्त्वा मांसभुग्भवेत् ॥

मरीचिः,—

सूर्य्यग्रहे तु नाश्नीयात् पूर्व्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् भुक्त्वा पापं समश्नुते ॥
[2]इमं धर्म्मं परित्यज्य योविप्रस्त्वन्यथाचरेत् ।
तस्योपनयनं भूयस्तप्तं सान्तपनं स्मृतम् ॥

सूर्य्यग्रहभोजने तप्तं चन्द्रग्रहणे सान्तपनम् ।

तदेवाह मनुः—

सूर्य्योपरागे यो भुंक्ते तस्य पापं महत्तरम् ।
तस्य पापविशुद्ध्यर्थं तप्तकृच्छ्रमुदीरितम् ॥
चन्द्रोपरागकाले तु भुक्त्वा कायं समाचरेत् ।
उभयोर्भोजने विप्रः पुनः संस्कारमर्हति ॥

विधवानां स्त्रीणां सन्न्यासिनाञ्च पुनः संस्कारवर्ज्जं ब्रह्मचारिणामेवम् ।

इति हेमाद्रौ सूर्य्यसोमोपरागकाले भोजनप्रायश्चित्तम् ।

(१) द्विज इति क्रीत-लेखितपुस्तकपाठः ।
(२) इति धर्म्मं इति क्रीत-लेखितपुस्तकपाठः ।

## अथ भिन्नपात्रभोजनप्रायश्चित्तमाह ।

[1]देवलः— स्वर्णे वा राजते कांस्ये प्रत्यहं भोजनं चरेत् ।

तद्भिन्नं यदि राजेन्द्र न कुर्य्यात्तत्र[2] भोजनम् ॥

जावालिः —

स्वर्ण-राजत-कांस्येषु पलाश कदलीषु च ।

विप्रो भुञ्जन् महापुण्यमवाप्नोति न संशयः ॥

यदि भिन्नं परित्याज्यं तत्र भुक्त्वैन्दवं चरेत् ।

एतानि स्वर्णराजतकांस्यानीषन्मात्रं विशकलितानि चेत् सर्व्वथै-तेषां [3]त्यागएव । तदेवाह—

गालवः— स्वर्णं कांस्यं तथा राजन् राजतं भिन्नमेव यत् ।

तत्र भुक्त्वा चरेत् कायमन्यथा दोषमाप्नुयात् ॥

पलाश-कदलीपर्णादिषु [4]यद् भोजनं चरेत् तान्येवाहरणीयानि न पात्रान्तराणि । अन्यथा पूर्व्ववत् प्रायश्चित्तं कृत्वा शुध्यति तदेवाह ।

पराशरः—

एषु पर्णेषु या भुक्तिस्तेषु तां सुखजश्चरेत् ।

अन्यपात्रं [5]यदा भिन्नं तत्र भुक्त्वैन्दवं चरेत् ॥

१ अयं पाठः क्रीत-लेखितपुस्तकयोर्न दृष्टः ।

२ स्तत्रभोजनमिति लेखितपुस्तकपाठः ।

३ त्याज्यमेव इति क्रीत-लेखितपुस्तकपाठः ।

४ यः इति क्रीतलेखितपुस्तकपाठः ।

५ तदा इति क्रीतलेखितपुस्तकपाठः ।

भिन्नभाण्डे एकपात्रभोजने विप्राणां धर्म्मोवर्द्धते अन्यथा क्षीणतामाप्नोति ।

गौतमः—

अभिन्नपात्रे यो [1]भुङ्क्ते पर्ण्ण्ष्वेतेषु जातितः[2] ।
भोजनं कुरुते यस्तु स पूर्णायुर्भवेदिह ॥

सर्व्वेषामेतदेव वेदितव्यं नान्यत्[3] ।

इति हेमाद्रौ भिन्नपात्रभोजनप्रायश्चित्तम् ।

---

(१) भुक्त्वा इति लेखितपुस्तकपाठः ।

(२) जायते इति क्रीतपुस्तकपाठः ।

(३) नान्यतः इति लेखितपुस्तकपाठः अन्यत इति क्रीतपुस्तकपाठः ।

अथ सन्ध्यादि[1]कालेषु चाण्डालध्वनिश्रवणप्रायश्चित्तमाह।

देवलः —

> स्नाने भोजनवेलायां जपहोमेषु पैतृके।
> सन्ध्यादिनित्यकार्य्येषु देवपूजासु सर्व्वदा॥
> चाण्डालास्त्रिविधाः प्रोक्तास्तेषां सम्भाषणादिकम्।
> कृत्वा कर्म्म परित्यज्य [2]दृष्ट्वा तत्पुनराचरेत्॥
> अन्यथा दोषमाप्नोति कर्म्मभ्रष्टोऽभिजायते।
> चाण्डालस्यैव यत्कर्म्म तत्तु दृष्ट्वा परित्यजेत्॥

ग्रामचाण्डालानां तत्तत्साधनध्वनिश्रवणं [3]कृत्वा भोजनादिकं परित्यजेत्। तत्तत्साधनानि, यथा[4] 'रजकस्य वस्त्र [5]संहननं चर्म्मकारस्य चर्म्मताड़नं, स्वर्णकारस्य सुवर्णादिताड़नं, तक्षकस्य दारुसौष्ठवार्थं तक्षणं, तिलघातस्य तिलयन्त्रध्वनिः कुलालस्य आर्द्रभाण्डताड़नं एतेषां तत्तत्साधनभूतानां ध्वनिश्रवणे चतद्दर्शने च त्याज्यं [6]भोजनं पुनः करणीयं वा तदेवाह।

मार्कण्डेयः—

> एतेषां साधनानाञ्च ध्वनिं श्रुत्वा स्वकर्म्मसु।
> कर्म्म तत् संपरित्यज्य स्रोतं स्पृष्ट्वा च दक्षिणम्॥

---

(१) सन्ध्यादिभोजनकालेषु इति लेखितपुस्तकपाठः।

(२) दृष्ट्वा इति लेखितपुस्तकपाठः।

(३) कृत्वा इति क्रीतलेखितपुस्तकपाठः।

(४) क्रीतलेखितपुस्तकयो र्न दृष्टं यथेतिपदम्।

(५) संघात ध्वनिरिति क्रीतपुस्तकपाठः।

(६) भोजनमिति पदं क्रीत लेखितपुस्तकयोर्न दृश्यते।

उच्छिष्टो पयसः स्पृष्ट्वा (१) दृष्ट्वा सूर्य्यं विशुध्यति ।
दर्शनं संपरित्यज्य पुनः कर्म्म समारभेत् ॥
अन्यथा भोजयेद् विप्रं कर्म्म कुर्य्यात् तथा यदि ।
अष्टोत्तरशतं जप्त्वा गायत्रीं वेदमातरम् (२) ॥
एतेन शुद्धिमाप्नोति तद्विना नात्र कर्म्मणः ।
इति ब्रह्मचारिणामिदं प्रायश्चित्तम् ॥

इति हेमाद्रौ चाण्डालादिध्वनिश्रवणे (३) प्रायश्चित्तम् ।

---

(१) पुनः कृत्वा इति श्रौत-लिखितपुस्तकपाठः ।
(२) वेदमाचरेत् इति श्रौतपुस्तकपाठः ।
(३) चाण्डालादिदर्शने प्रायश्चित्तमिति श्रौत-लिखितपुस्तकपाठः ।

## अथ रजस्वलान्नभोजनप्रायश्चित्तमाह ।

देवल: —

> रजस्वलान्नं यो भुङ्क्ते द्विजो ज्ञानात् सकृद् यदि ।
> रौरवं नरकं याति स भवेत् सद्विगर्हितः ॥

ऋतुमत्यज्ञानात् पचनादिकं कृत्वा भुक्तवन्तं ईषत् शुष्कं रजो दृष्ट्वा यदि रजस्वला भवामीति ज्ञात्वा ज्ञापयति । तदुपसर्गी सर्वे भुक्तवन्तो रजस्वलान्नभोजिनः । तेषां भोक्तॄणां पुनरुपनयनम् चान्द्रायणाभ्यां विना शुद्धिर्नास्ति । तदिदमाह

मार्कण्डेयः —

> अज्ञात्वा पुष्पिणी नारी कृत्वा वै पचनक्रियाम् ।
> पश्चात् शुष्कं रजो दृष्ट्वा तस्माद्विप्रान्नपक्रमेत् ।
> तां दृष्ट्वा भाषणं श्रुत्वा भोजनं द्विजनायकाः
> कृत्वा शुद्धिमवापुस्ते व्रतचान्द्रे विधाय च ।
> पञ्चगव्येन शुद्धाः स्युरन्यथा पापिनोऽभवन् ।

पतिव्रताचारिणां स्त्रीणामप्येवम् ।

इति हेमाद्रौ रजस्वलान्नभोजनप्रायश्चित्तम् ।

---

(१) [illegible]

(२) [illegible]

(३) शुष्कं इति [illegible] ।

(४) [illegible]

(५) भोक्तार इति [illegible] ।

(६) [illegible]

## अथ दुष्टान्नभोजनप्रायश्चित्तमाह।

देवलः —

शूद्रैर्नानाविधैर्वर्णैश्चाण्डालादिभिराचितम्।
पुष्पवत्या सूतिकया दृष्टं वा पतितादिभिः॥
अन्नं भक्ष्यं तथा शाकं [1]भुङ्क्ते विप्रः सकृद्यदि।
प्रायश्चित्ती भवेत् पापी न कर्म्मार्हो भवेदिह॥

गालवः—

चाण्डाल-पतित-व्रात्य-[2]चाटुकाराऽजितेन्द्रियैः।
अस्नानवर्त्तजीरैश्च [3]श्वकाकैः परिदूषितम्॥
मलमूत्रसमीपस्थं तुषाङ्गारकपालवत्।
तत् स्पृष्टोच्छिष्टसंस्पृष्टं भक्ष्यमन्यच्चयद्भवेत्॥
द्विजैस्तत्र न भोक्तव्यं शाकं वा भोज्यमेव वा।
यदि मोहवशात् [4]भुङ्क्ते प्रायश्चित्ती भवेदिह॥

लौगाक्षिः —

पूर्व्वोक्तैश्च निमित्तैर्व्वा स्पृष्टमुच्छिष्टमेव यत्।
तदन्नं यो द्विजो भुङ्क्ते पश्चात्तापमवाप्नुयः[5]॥

---

१. भुक्ता इति क्वचित् लिखितपुस्तकपाठः।
२. चाटुकाराजितेन्द्रियैः इति क्वचित् पुस्तकपाठः।
३. श्वकाकैः परिदूषितं इति लिखितपुस्तकपाठः।
४. भुक्ता इति क्वचित् लिखितपुस्तकपाठः।
५. [illegible] इति क्वचित् लिखितपुस्तकपाठः।

स्वशरीरविशुद्ध्यर्थं कायकृच्छ्रं समाचरेत् ।
पञ्चगव्येन शुद्धिः स्याद् व्रतिनां यतिनामिह ॥
विधवानाञ्च नारीणां नान्यथा शुद्धिरिष्यते ।

इति हेमाद्रौ दुष्टान्नभोजनप्रायश्चित्तम् ।

---

इदमङ्कं लिखितपुस्तकपाठदृष्टम् ।

---

अथ निषिद्धदिवसेषु द्विर्भोजनप्रायश्चित्तमाह।

देवलः — पित्रोर्मृताहे पूर्व्वेद्युर्भानुवारे च संक्रमे।
तथा चतुर्दश्यष्टम्योर्[2] व्रतेषु च महोत्सवे॥
श्रोत्रिये मरणं प्राप्ते गुरूणां दुःखसम्भवे।
पितरौ व्याधिना ग्रस्तौ महाराजनिपातने॥
उक्तेष्वेतेषु सर्व्वेषु अन्येषु व्रतपर्व्वसु।
न द्विवारं समश्नीयाद् विप्रो धर्म्मपरायणः॥

मार्कण्डेयः — अर्कद्विपर्व्वरात्रौ च मृताहात् पूर्व्ववासरे।
तथा चतुर्दश्यष्टम्योर्व्रतेषु च महोत्सवे॥
[3] श्रोत्रिये मरणं प्राप्ते गुरूणां दुःखसम्भवे।
पितरौ व्याधिना ग्रस्तौ महाराजनिपातने॥
उक्तेष्वन्येषु सर्व्वेषु अन्येषु व्रतपर्व्वसु।
न द्विवारं समश्नीयाद् विप्रो धर्म्ममनुस्मरन्॥
अस्य पापविशुद्ध्यर्थं सहसा निष्कृतिं चरेत्।
अज्ञानात् कायकृच्छ्रं स्यात् ज्ञात्वा तप्तं समाचरेत्॥
पञ्चगव्येन शुद्धोऽभूद् विप्रो द्विवारभोजने।

इति हेमाद्रौ निषिद्धदिवसेषु [4] द्विर्भोजनप्रायश्चित्तम्।

(१) स्नाय इति कोतपुस्तकपाठः।
(२) चतुर्दश्यष्टम्योरिति कोतनैर्मितपुस्तकपाठः।
(३) एतच्छ्लोकान्तर्गत पाठः कोतपुस्तके नोपलभ्यः।
(४) द्विवार इति कोतनैर्मितपुस्तकपाठः।

## अथ देवपूजा-वैश्वदेवपरित्यागप्रायश्चित्तमाह।

देवलः —

देवताराधनं त्यक्त्वा वैश्वदेवं तथाऽतिथिम्।
यो विप्रो भोजनं कुर्य्यात् नित्यहोमं तथा त्यजन्॥
सपापी सहि विज्ञेयः सर्व्वधर्म्म बहिष्कृतः।

मार्कण्डेयः

वैश्वदेवं नित्यहोमं तथैवातिथिभोजनम्।
वैश्वदेवं देवतार्च्चां त्यक्त्वा विप्रो महामुनिः॥
भुक्त्वाऽज्ञानात् महादोषं सपापी लुप्यते ध्रुवं।

जावालिः —

वैश्वदेवं देवतार्च्चां नित्यहोमं तथाऽतिथिम्।
ब्रह्मयज्ञं पितृणाञ्च तर्पणं पितृवल्लभम्॥
त्यक्त्वा भुक्त्वा तथा विप्रः सपापी लुप्यते ध्रुवं।
तप्तकृच्छ्रं चरेत्पापी तस्माद्दोषात् प्रमुच्यते।
पञ्चगव्येन पूतात्मा नान्यथा शुद्धिरस्तिहि।

इति हेमाद्रौ देवपूजा वैश्वदेव-ब्रह्मयज्ञाऽतिथि
परित्यागप्रायश्चित्तम्।

(१) ज्ञात्वा इति लिखितपुस्तकपाठः।
(२) महादोषम् इति लिखितपुस्तकपाठः।
(३) पितृवल्लभः इति क्वचित् लिखितपुस्तकपाठः।

अथ उष्णोदकस्नान मृत्तिकारहितशौचप्रायश्चित्तमाह।

उष्णोदकेन सप्ताहं तथा कूपोदकेन च।
मृत्तिकाभिर्विनाशौचं [1]कृत्वासप्ताहमादरात्॥
[चतुर्वेदविदोविप्राः[2] शूद्रा एव न संशयः।

गौतमः—

मृत्तिकाभिर्विनाशौचं स्नानमुष्णोदकेन वै।]
कूपोदकेन सप्ताहं कृत्वा विप्रः सशूद्रवान्॥

जावालिः—

उष्णोदकेन सप्ताहं तथा कूपोदकेन च[3]।
मृत्तिकाभिर्विनाशौचं तथा कूपोदकेन च।
कृत्वाशौचादिकं विप्रः शूद्र एव न संशयः।
प्रायश्चित्तमिदं प्रोक्तं ऋषिभिर्लोकसम्मतम्॥
प्राजापत्यं विशुद्ध्यर्थं चरेत् पूतोभवेदिह।
पञ्चगव्यं पिबेत् पश्चात् तेन शुद्धिर्नचान्यथा॥

विधवा ब्रह्मचारि-यतीनां द्विगुणम्।

इति हेमाद्रौ उष्णोदक-कूपोदकस्नान-मृत्तिका रहितशौचप्रायश्चित्तम्।

---

(१) स्नानमुष्णोदकेनार्ध इति क्रीतपुस्तकपाठः।

(२) विप्र इति काशीपुस्तकपाठः।

[ ] अयं पाठः क्रीतपुस्तके न दृष्टम्।

(३) तथाकूपोदकं महत् इति लेखितपुस्तकपाठः।

## अथ उपवीतं विना भोजने प्रायश्चित्तमाह ।

देवलः विना यज्ञोपवीतेन शिखया च द्विजोत्तमः ।

उच्छिष्टो यदि मोहात्मा[1] पापकारी भवेद्द्विजः ॥

मार्कण्डेयः—

शिखया ब्रह्मसूत्रेण विना ऽश्नीयात् तु यो द्विजः ।[2]

उपोष्य रजनीमिकां पञ्चगव्येन शुद्ध्यति[3] ॥

गौतमः—

शिखा च ब्रह्मसूत्रञ्च नष्टं भ्रष्टं यदा भवेत् ।

धृत्वा नवं पुनर्म्मन्त्रात् भ्रष्टं तत्तु जले क्षिपेत् ॥

शिखां विना द्विजश्रेष्ठः कर्णनीवाललोमभिः[4] ।

दृष्ट्वा तद्दोषशान्त्यर्थं कायकृच्छ्रं समाचरेत् ॥

यावत् शिखा पुनर्जाता तावत् कर्णेन धारयेत् ।

ब्रह्मविष्णुमहेशाख्या ब्रह्मसूत्रस्य तन्तवः ॥

एतस्मिन् त्रुटिते विप्रः पुनर्धृत्वा नवं मुदा ।

नित्यकर्म्म प्रकुर्व्वीत त्रुटितं निक्षिपेज्जले ॥

ब्रह्मसूत्रं दक्षिणांसे भ्रष्टं स्याच्चतुरङ्गुलम् ।

प्राणायामत्रयं कृत्वा पुनस्तत्स्थानमानयेत्[5] ॥

(१) महात्मा इति क्रीत-पुस्तकपाठः

(२) विनाश्नात्तु योद्विज इति क्रीतपुस्तकपाठः ।

(३) पञ्चगव्येन शुद्ध्यति इति क्रीत-लेखितपुस्तकपाठः ।

(४) यावर्ल्लक्ष्वा इति क्रीत पुस्तकपाठः ।

(५) आचरेत इति क्रीत लेखितपुस्तकपाठः ।

कूर्परे ब्रह्मसूत्रं चेद्भ्रष्टं यदि ह दैवतः
प्राणायामशतं कृत्वा स्वस्थाने पूर्ववत्क्षिपेत् ।
मणिबन्धस्थितं सूत्रं भ्रष्टं यदि ह पूर्ववत् ।
तद्दोषपरिहारार्थं प्राणायामसहस्रकम् ॥
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरीरिता ।
[1] कृत्वा शुद्धिमवाप्नोति वामहस्तादधो यदि ।
तत्सूत्रं सहसा त्यक्त्वा दृष्ट्वा सूर्यं मुदा द्विजः ।
जले भ्रष्टं परित्यज्य सहस्रं वेदमातरम् ।
जप्त्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरिष्यते ॥

इति हेमाद्रौ उपवीतस्थितं विना भोजने नित्यकर्मकरणे च प्रायश्चित्तम् ।

---

[1] अयं पाठः लिखितपुस्तके नास्ति

## अथ भोजनकाले क्षुताऽपानवायूत्सर्गजृम्भणानां प्रायश्चित्तमाह ।

देवलः— विप्रो[1]भोजनकाले तु क्षुतं वा जृम्भणं तथा ।
अपानवायोरुत्सर्गं कृत्वा मद्यः स पापभाक् ॥
अपानवायुमोक्षञ्चेत् कृत्वा भुञ्जीत पापभाक् ॥

विष्णुः— द्विजोभोजनकाले तु जृम्भणं क्षुतमेव वा ।
अपानवायुमोक्षं वा कुर्व्वन् पापी भवेत्तदा ॥
श्रोत्रीये जलं धृत्वा तस्य मूर्द्धनि विन्यसेत् ।
पृच्छेत्तं जन्मसदनं दिवा वा यदि वाऽदिवा ॥
क्षुते तु तस्य मज्ञाते एवं कृत्वा विशुध्यति ।
जृम्भणेऽप्येवम् ।

अपानवायोरुत्सर्गे जाते तत्तु[2] विवर्ज्जयेत् ।
भुक्त्वा पापमवाप्नोति पापं यत् शौचवर्ज्जने ॥
लोभेन भुक्त्वा तद्भुक्तं स्नात्वा कार्यं समाचरेत् ।
एतेन शुद्धिमाप्नोति द्विजो नाऽन्यत्र कर्म्मणि ॥

इति स्त्रीणां यति-ब्रह्मचारिणामप्येवम् ।

इति हेमाद्रौ भोजनकाले क्षुत-जृम्भणाऽपानवायूत्सर्गप्रायश्चित्तम् ।

1 विप्र इति क्वचित् लिखितपुस्तकपाठः
2 प्रायश्चित्ती इति क्वचित् लिखितपुस्तकपाठः
3 [illegible] इति क्वचित् लिखितपुस्तकपाठः

## अथ सूतकद्वितयभोजनप्रायश्चित्तमाह ।

देवलः — अशौचद्वितये राजन् असगोत्रोऽथवा व्रती ।
विधवा वाऽन्यगोत्रा वा यतिर्वा नियमस्थितः ॥
सूतकद्वितये भुञ्जन् महान्तं नरकं व्रजेत् ।

गालवः— [1]यतिर्वा ब्रह्मचारी वा विधवा [2]वाऽन्यगोत्रजा ।
असगोत्रोऽथवा विप्रस्त्वशौचद्वयनिर्म्मितम् ॥
अन्नं भुक्त्वा महापापी नरकं याति दारुणम् ।
भुवमासाद्य तत्पश्चाज्जायते रोगबाधितः ॥

गौतमः—विप्रस्त्वाहारमन्विच्छन् यतिर्वा प्रथमाश्रमः ।
सूतकद्वितये भुक्त्वा नारी वा [3]पतिवर्ज्जिता ॥
पुनः संस्कार [4]पूतात्मा तप्तकृच्छ्रं समाचरेत् ।
पञ्चगव्यं पिबेत् पश्चात् शुद्धिमाप्नोति नान्यथा ॥

यति-विधवयोः पुनः संस्कारवर्ज्जं प्रायश्चित्तं वेदितव्यम् ।

इति हेमाद्रौ सूतकद्वितयभोजनप्रायश्चित्तम् ।

---

(१) पतिर्वा इति लेखितपुस्तकपाठः ।
(२) नान्यगोत्रजा इति लेखितपुस्तकपाठः ।
(३) यतिवर्ज्जिता इति कोतपुस्तकपाठः ।
(४) भूतात्मा इति लेखितपुस्तकपाठः ।

## अथाऽन्योन्यसंस्पृष्टान्नभोजनप्रायश्चित्तम् ।

देवलः—एकपंक्त्युपविष्टौ यौ भुञ्जानौ तौ परस्परम् ।

स्पृष्टान्नमत्यजन्तौचेज् [1]ज्ञेयौ तौ मांसभोजिनौ ॥

एकपंक्त्युपविष्टा ये भुञ्जते मुखजाः सकृत् ।

अन्योन्यस्पर्शनं कृत्वा मत्या जग्ध्वा स्वपात्रजम् ॥

मांसतुल्यं तदन्नं स्याद् भोक्तारोमांसभोजिनः ।

एकपंक्त्युपविष्टश्च ब्राह्मणोब्राह्मणं स्पृशेत् ॥

तदन्नमत्यजन् भुक्त्वा प्रायश्चित्ती भवेत्तथा ।

अन्यगोत्रं द्विजः स्पृष्ट्वा भुक्त्वा चान्द्रायणं चरेत् ॥

सगोत्रस्पर्शने भुक्त्वा तप्तकृच्छ्रं समाचरेत् ।

पिता पुत्रं भ्रातरं वा स्पृष्ट्वा भुक्त्वा तु कायकम् ॥

पुत्रस्य वा कनिष्ठस्य पितुरुच्छिष्टभोजने ।

न दोषः पुत्रयोस्तत्र पिताकायकमाचरेत् ॥

उच्छिष्टमित्यत्र कवलमात्रप्राशनं न पात्रस्थान्नभोजनम्[2] ।

गौतमः—

पिताऽनुजस्य पुत्रस्य तयोः प्रीतिमनूद्वहन् ।

निक्षिपेत् कवलं तत्र न दोषस्तत्र भोजने ॥

पिता ताभ्यां सह न भुञ्जीयात् कवलदाने न दोषः । तदाह

१ अत्यजन् भुक्त्वा इति कतिपयपुस्तकपाठः ।

२ भोजने इति कतिपयपुस्तकपाठः ।

आपस्तम्बः—

"प्रीतिर्ह्युपलभ्यते पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यं, धर्म्म-विप्रतिपत्तावभोज्य"मिति। यति-ब्रह्मचारिणामप्येवम्।

इति हेमाद्रौ परस्परोच्छिष्ट[1]भोजनप्रायश्चित्तम्।

---

(१) परस्परोच्छिष्टभोजन इति क्रीतपुस्तकपाठः।

## अथ शिवनिर्माल्यभोजनप्रायश्चित्तमाह ।

देवलः -

शम्भोर्निवेदितं भक्तं [1]तत्तोयं शाकमेव वा ।

विप्रः कदा न भुञ्जीयाद् भुक्त्वा तप्तं समाचरेत् ॥

मार्कण्डेयः—

शिवे निवेदितं भक्तं प्रत्येकं देवतां विना ।

द्विजो भुक्त्वा चरेत्तप्तं तथा तत्तोयसेवनात् ।

शालग्रामादि देवतासम्पर्के विशेषमाह ।

जाबालिः —

शिवविष्ण्वादिभिर्देवैर्वेष्टितं[2] यत्समर्पितम् ।

तद्भुक्त्वा विप्रवर्योऽसौ न भवेद् दोषभाक्[3] तत ।

हारीतः -

शालग्रामादिभिः शम्भोर्वेष्टितस्य यदर्पितम्

तद् भोक्तव्यं द्विजैर्नित्यं तत्तोयं परिवर्ज्जयेत् ॥

शालग्रामादिदेवतासमीपे शिवेऽर्पितं नैवेद्य चान्द्रायणसमं तद्दिन

शिवनिर्म्माल्यं तत्तोयञ्च मांसतुल्यम् ।

(१) तत्तोयं इति लिखितपुस्तकपाठः । तोयं वा शाकमेव वा इति क्रीतपुस्तकपाठः ।

(२) वेष्टितैरिति क्रीतपुस्तकपाठः ।

(३) क्वत इति लिखितपुस्तकपाठः ।

याज्ञवल्क्यः—

शिवे निवेदितं भक्तं सालग्रामादिवेष्टितम् ।
तद्भक्तभोजने चान्द्रायणकृन् नात्र संशयः ॥
अन्यथा मांसतुल्यं स्यात् तत्तोयमसृजा समम् ॥ इति ।
ब्रह्मचार्य्यादीनामेवं वेदितव्यम् ।

इति हेमाद्रौ शिवनिर्म्माल्यभोजनप्रायश्चित्तम् ।

---

## अथ नीलवस्त्रं धृत्वा [1]कर्म्मकरणे भोजने वा प्रायश्चित्तमाह।

देवलः—नीलीवस्त्रञ्च तच्चिह्नं धृत्वा स्नानाद्द्विजश्चरेत्।
स विप्रस्त्वशुचिर्नित्यं न कर्म्मार्हो भवेदिह॥
तच्चिह्नमिति नीलतन्तुभिर्वस्त्रान्ते वस्त्रमध्ये वा निर्म्मितं वस्त्रं तद्धारणे विप्रस्त्वशुचिः। तदाह—
गौतमः—नीलीमयं पटं धृत्वा विप्रस्तच्चिह्नमूत्तकम्।
कृत्वा कर्म्माणि भुक्त्वा वा न तत्कर्म्मफलं लभेत्॥
भोजने मांसभुग्विप्रः सर्व्वथा तत्परित्यजेत्।
गालवः—नीलीवस्त्रं तु तच्चिह्नं धृत्वा कर्म्म करोति यः।
स विप्रस्तु न कर्म्मार्हस्तत्कर्म्म विफलं भवेत्॥
एकत्र दिवसे भुक्त्वा धृत्वा नीलीमयं पटम्।
कुर्य्याद्देहविशुद्ध्यर्थं यावकं मनुचोदितम्॥
अभ्यासे तु [2]पराकः स्याद् वत्सरे चान्द्रमुच्यते।
यति-ब्रह्मचारि विधवानां प्रायश्चित्तमिदं प्रयोक्तव्यम्।

इति हेमाद्रौ नीलीवस्त्रं [3]धृत्वा कर्म्मकरणे भोजने वा प्रायश्चित्तम्।
इति हेमाद्रौ जातिभ्रंशकरप्रायश्चित्तम्।

---

(१) कर्म्म कृत्वा इति क्रीत-लेखितपुस्तकपाठः।
(२) पराकं स्यादिति क्रीतपुस्तकपाठः।
(३) धृत्वा भोजने प्रायश्चित्तमित्येव क्रीत लेखितपुस्तकपाठः।

## अथ प्रकीर्णकप्रायश्चित्तमाह।

## तत्र दुर्मृतिप्रायश्चित्तम्।

देवलः—पापेभ्यः पूर्व्वमुक्तेभ्यो [1]यदन्यत् खलु विद्यते।
तत्प्रकीर्णकमित्याहुर्दुर्मृतेश्च विशोधनम्॥
विद्युदग्निपयःपाशचाण्डालैर्ब्राह्मणो हतः।
एक-[3]द्वि-त्रि-चतुः पञ्च षडब्दं कृच्छ्रमाचरेत्॥

विद्युदशनिः। अग्निर्दावानलः स्वकृतो वा। पयस्तडाक-नद्यादि; चाण्डालो जनङ्गमः। एतैर्निमित्तैर्विप्रः प्रमादात् ज्ञात्वा वा यदि म्रियते। तदा तस्य सद्योदहनपक्षे तद्वचनोक्तानि कृच्छ्राणि कृत्वा दहेत्। अशक्तविषये कालमाह।

मासत्रये तु षण्मासे वत्सरे वा विचक्षणः।
पुत्रादिर्दुर्मृतस्याऽस्य कुर्य्यात् संस्कारमादरात्॥

देशकालवैपरीत्यशङ्कायां दुर्मृतस्य लोकमाकाङ्क्षन् तत्तन्निमित्तोक्तकृच्छ्रानुमरणं कृत्वा दहेत्।

देवलः[2]—

विद्युता वह्निना तोयैः पाशैर्वाऽथ जनङ्गमैः।
विप्रः प्राणान् [4]त्यजेद्यस्तु तस्य शुद्धिरुदीरिता॥
सद्योदहनपक्षे तु कुर्य्यात् पूर्व्वोक्तमादरात्।

---

(१) नेभ्यः खलु विद्यते इति क्रोड़-लेखितपुस्तकपाठः।
(२) तत्र इति लेखितपुस्तकपाठः।
(३) क्रोड़-लेखितपुस्तकयोर्नास्ति।
(४) परित्यज्य इति क्रोड़-लेखितपुस्तकपाठः।

तस्य एकं षडब्दं तदानीं विशोधनं, अग्निदग्धस्य षडब्दद्वयं विशोधनम्। जले मृतस्य त्रिगुणितषडब्दम्। चाण्डालेन मृतस्य[१] तानि कृच्छ्राणि तत्तत्संख्यापरिमितानि कृत्वा दग्ध्वा मृतिदोषात् पूतो भवति।

तदाह—

गौतमः—[२]दुर्मृतानां तदा पुत्त्रः कृत्वा कृच्छ्राणि धर्म्मतः।
दहेत् पापविशुद्धोऽभूद् अन्यथा दोषभाग्भवेत्॥

ग्रन्थान्तरे—

दुर्मृतस्य तदानीं यः संस्कारं कर्त्तुमिच्छति।
एक-द्वि-त्रि-चतुः-पञ्च-षडब्दं कृच्छ्रमाचरेत्॥
एतेन शुद्धिमाप्नोति न कालस्य प्रतीक्षणम्।
पिशाचता न तस्याऽस्ति पुत्त्रोऽभूदनृणस्तथा॥

त्रिमासत्रय-षण्मासाब्दैकमृतानां दुर्मृतिप्रायश्चित्तं तारतम्येन विशि-
नष्टि

गोभिलः—

एकमासे दुर्मृतानामब्दमात्रं विशोधनम्।[३]
ऋतुत्रये तु द्व्यब्दं स्यात् त्र्यब्दं संवत्सरे स्मृतम्।
नारायणबलिं कृत्वा कुर्य्यात् कर्म्मौर्द्धदैहिकम्।
एतेन शुद्धिमाप्नोति परलोकं स गच्छति॥

१ दुर्मृतानाम् इति [illegible] पुस्तके पाठः।
२ [illegible]
३ [illegible]

व्याघ्रादिभिर्हतस्य विशेषमाह—

व्याघ्र-भल्लूक वाराह-सर्प-वृश्चिक कुञ्जरैः।
शृङ्गिभिर्विष[1]पानाद्यैर्वृक्ष-शैलनिपातनैः॥
विप्रोयदा मृतिं प्राप्तः खड्गदन्तादिभिः खरैः।
गृहभित्त्यश्मभिर्वाऽपि स्तम्भ-कण्टक-शङ्कुभिः॥
तं तदा दाहयेत् पुत्त्रः सद्यः कृत्वा षड़ब्दकम्।
मासत्रयेऽब्दमात्रं स्यात् त्र्यब्दकं ऋतुदर्शनात्॥
वत्सरे तु षड़ब्दं स्यात् सर्व्वेषां दुर्म्मृतौ स्मृतम्।

विद्युदग्निभिर्हतैर्विना।

गालवः—देशान्तरे वा युद्धे वा हतं व्याघ्रेण वा यदि।
मधुना सर्पिषा सिक्ता दाहयेद् विधिना च तम्॥

विधिवदित्युक्त[2] प्रायश्चित्तं [3]कर्त्तव्यमित्यर्थः।

प्रायश्चित्तविहीनस्य दुर्मृतस्य पिशाचता।
सद्यः शतगुणं प्रोक्तं प्रायश्चित्तं मनीषिभिः।

इति हेमाद्रौ दुर्मृतस्य विप्रस्य प्रायश्चित्तम्।

---

(१) विषयानाद्यैरिति लेखितपुस्तकपाठः।
(२) इत्युक्तं प्रायश्चित्तमिति क्रीतपुस्तकपाठः।
(३) कर्त्तव्यमितिपदं क्रीत लेखितपुस्तकयोर्नास्ति

## अथ क्षत्रियवैश्ययोर्दुर्मृतयोः प्रायश्चित्तमाह ।

[1]देवलः—

> बाहुजस्तूरुजो वापि निमित्तैर्यदि [2]वा हतः ।
> प्रायश्चित्तं मुनिप्रोक्तं विप्रस्यार्द्धं समाचरेत् ॥

[3]( तत्तत्स्त्रीणां तत्तत्प्रायश्चित्तम् )—

> [ वैश्यस्य क्षत्रियस्यार्द्धं पादजे पादमाचरेत् ।
> तत्तत्स्त्रीणां तत्तदर्द्धं प्रायश्चित्तं विशोधनम् ॥ ]

राज्ञां [4]गजाश्व-शस्त्र-पाषाण-लगुडादिभिः युद्धकाले मृतानां [5]न प्रायश्चित्तं । अन्यत्र मरणे तु पूर्व्वोक्तं प्रायश्चित्तम् । विप्रस्त्रीणां पूर्व्वोक्तनिमित्तैर्मरणसम्भवे विप्रस्यार्द्धं वेदितव्यम् ।

कन्यकानां बालानां दुर्म्मरणे प्रायश्चित्तं प्राजापत्यकृच्छ्रमात्रं कृत्वा दहनं [6]प्रोथनं वा कुर्य्यात् ।

इति हेमाद्रौ क्षत्रियादीनां दुर्मृतिप्रायश्चित्तम् ।

---

१ क्रोतपुस्तके नास्ति ।
२ वो हत इति क्रोत लिखित-पुस्तकपाठः ।
३ लिखितपुस्तके नास्ति ।
अयं श्लोकः क्रोतपुस्तके नास्ति ।
४ राजाऽश्व इति क्रोतपुस्तकपाठः ।
५ नेति पदं क्रोत-लिखितपुस्तकयोर्नास्ति ।
६ खनन इति क्रोत लिखितपुस्तकपाठः ।

अथ दुर्मृतानां रज्ज्वादिभेत्तॄणां प्रायश्चित्तमाह ।

देवलः—

कण्ठपाशं दुर्मृतस्य यो विप्रश्छेत्तुमिच्छति ।
तस्य तस्याऽपवार्त्ता च तप्तकृच्छ्रं [1]चरेत्तदा ॥
अन्यथा दोषमाप्नोति तत्र [2]नार्थफलं लभेत् ।

इति हेमाद्रौ दुर्मृतानां रज्ज्वादिभेत्तॄणां प्रायश्चित्तम् ।

---

(१) समाचरेत् इति क्रीतपुस्तकपाठः ।
(२) पार्थ इति क्रीत लेखितपुस्तकपाठः ।

## अथ दुर्मृतिवाहकानां प्रायश्चित्तमाह ।

देवलः—

दुर्मृतं यो वहेत् स्कन्धे दहेद्वापि तदेव वा ।
पराकमुभयोः प्रोक्तं देहशुद्ध्यर्थमादरात् ॥

पराशरः—

यो विप्रो दुर्मृतं [1]ज्ञात्वा दहेद्धृत्वा स दोषभाक् ।
प्रायश्चित्तं तदा कुर्य्यात् पराकं मुनिचोदितम् ॥
तदस्थीनि परित्यज्य दुर्मृतस्य खलस्य च ।
पतितस्य प्रजारस्य [2]तस्मात्तत् सूतकं [3]व्रजेत् ॥
यदि मोहात्तदस्थीनि धृत्वा विप्रः स दोषभाक् ।
कालान्तरे गतिर्मृग्या सद्यस्तद्ग्राह्यमादरात् ॥
दुर्मृतं पतितं दृष्ट्वा सचेलं स्नानमाचरेत् ।
दृष्ट्वा पश्येत्तदाभानुमन्यथा रौरवं व्रजेत् ॥

इति हेमाद्रौ दुर्मृतवाहनप्रायश्चित्तम् ।

---

(१) श्राद्धे धृत्वा दग्ध्वा इति क्रीत-लेखितपुस्तकपाठः ।
(२) सम्प्राप्तं इति क्रीतपुस्तकपाठः ।
(३) भजेत् इति क्रीत-लेखितपुस्तकपाठः ।

## अथ मूल्यं गृहीत्वा शववाहकप्रायश्चित्तमाह ।

देवलः—

विप्रः सर्व्वत्र मूल्यं वै गृहीत्वा कुणपं वहेत् ।
दग्ध्वा वापि महद् घोरं नरकं याति सर्व्वदा ॥

गालवः—मूल्यं[1] धृत्वा द्विजो यस्तु विप्रः कुणपमुद्वहेत् ।
दग्ध्वा पापमवाप्नोति नरके नियतिः[2] सदा ॥

मरीचिः—

अनाथं वा सनाथं वा यो विप्रः कुणपं वहेत् ।
गृहीत्वा मूल्य[3] मन्यत्र तत्र वा पापभाग्भवेत् ॥
तस्य निष्कृतिरुत्पन्ना प्राजापत्यादिह प्रभो ।
अन्यथा दोषमाप्नोति भारवाहोभवेद्भुवि ॥
उदासीनतया विप्रः कुणपं यत् समुद्वहेत् ।
पदे पदेऽश्वमेधस्य सम्पूर्णं फलमश्नुते ॥

इति हेमाद्रौ मूल्यं गृहीत्वा वाहकानां मृताऽहरणप्रायश्चित्तम् ।

---

(१) मूलम् इति क्रीतपुस्तकपाठः ।
(२) नियतः सदा इति क्रीतपुस्तकपाठः ।
(३) मूल्यमन्यात्रा इति क्रीत-लिखितपुस्तकपाठः ।

## अथ धनिष्ठापञ्चकमरणे प्रायश्चित्तमाह ।

देवलः— धनिष्ठापञ्चके [1]वापि विप्रोयदि विपद्यते ।
तदा कर्त्तृविनाशः स्याद् गृहे वाऽरिष्टमश्नुते ॥

जावालिः—मरणं यदि विप्राणामन्येषां वसुपञ्चके ।
तदा गृहपतेर्नाशो[2] गृहं वाऽरिष्टमश्नुते ॥

मार्कण्डेयः—यस्य कस्य मृतिस्तत्र धनिष्ठापञ्चके [3]यदि ।
[4]तदा कर्त्तरि शङ्का स्याद् गृहं वा पापमश्नुते ।
तद्दोषपरिहारार्थं अत्र दानं समाचरेत् ॥
एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ।
नवषष्टिपलं वापि दद्याद् विप्राय शक्तितः ॥

पक्षान्तरमाह—

गौतमः—"धनिष्ठापञ्चकमृते हिरण्यशकलं मुखे न्यस्याहुऽऽतित्रयं तत्र [5]अतोवहवपामिति हुत्वा दहेत् । तदा दोषोनाशमाप्नोति सर्व्वदा कर्त्ता [6]गृहे सुखी भूयात् अन्यथा दोषमश्नुते ।" सर्व्ववर्णसममेतत् होमं विना ।

इति हेमाद्रौ धनिष्ठापञ्चकमरणप्रायश्चित्तम् ।

---

(१) यस्तु इति क्रीत-लेखितपुस्तकपाठः ।
(२) भित्तिरिति लेखितपुस्तकपाठः ।
(३) तदा इति क्रीतपुस्तकपाठः ।
(४) तथा इति क्रीत-लेखितपुस्तकपाठः ।
(५) अतो व हविषां इति क्रीतपुस्तकपाठः ।
(६) गृहं इति क्रीत-लेखितपुस्तकपाठः ।

## अथ नन्दाभद्रातिथौमरणप्रायश्चित्तमाह ।

देवलः— उभयोः पक्षयोः प्रतिपत् षष्ठी चैव हरेर्दिनम् ।

एता नन्दा महाराज भद्रावक्ष्ये तथा शृणु ॥

द्वितीया सप्तमी चैव द्वादशी पक्षयोर्द्वयोः ।

एता[1] भद्राश्च तिथयो मरणे पापदायिकाः[2] ॥

कात्यायनः—

नन्दासु भद्रतिथिषु यो विप्रो निधनं गतः ।

तद्गृहे सर्व्वदाऽरिष्टं भवत्येव महात्मनाम् ॥

गौतमः—नन्दायान्तु तथा[3] भद्रे यदा स्यान्मरणं भुवि ।

न तत्र वृद्धिरुत्पन्ना दत्तैर्दानशतैरपि ॥

तत्परिहारमाह—

यमः— नन्दायां गौः प्रदातव्या भद्रे भूमिरनन्तरम् ।

विप्रेभ्योदीयते येन न दोषस्तत्र विद्यते ॥

कर्त्ता सुखमवाप्नोति मृतः सद्गतिमाप्नुयात् ।

क्षत्रियादीनामेवं विवेचनीयम् ।

इति हेमाद्रौ नन्दाभद्रा[4]तिथि मरणप्रायश्चित्तमाह ।

---

(१) एते इति लेखितपुस्तकपाठः ।

(२) पापदायिन इति लेखितपुस्तकपाठः ।

(३) यदा इति क्रीतलेखितपुस्तकपाठः ।

(४) नन्दाभद्रायां इति क्रीत-लेखितपुस्तकपाठः ।

## अथ दुष्टवारेषु [1] मृतिप्रायश्चित्तमाह ।

देवलः—

> भानुः कुजो भृगुर्म्मन्दवारो दुष्टो नृणां मृतौ ।
> आयुर्हानिर्यशोहानिः कुल [2] कीर्त्तिविनाशनम् ॥
> मरणे तु क्रमाद्राजन् योजनीयं शनैः शनैः ।
> [3] [भानौ कुजे शनौ वस्त्रं तत्तद्वर्णं प्रदापयेत् ॥
> भृगौ हिरण्यसहितं वस्त्रदानं विशोधनम् ।]

[4] [ गालवः—

> भानुवारः कुजोवारो भृगुर्म्मन्दो यथाक्रमम् ।]

[5] [ तत् प्रायश्चित्तमाह,

मार्कण्डेयः—

> भानौ कुजे शनौ वस्त्रं तत्तद्वर्णं प्रदापयेत् ।
> भृगौ हिरण्यसहितं वस्त्रदानं विशोधनम् ॥ ]

तदाह—

मरीचिः—भद्रे भूमिप्रदानं स्यात् त्रिपदर्क्षे हिरण्यदः ।

> वारे [6] वाराऽधिदैवत्यं वासोदानं विशोधनम् [7] ॥

---

(१) मृतप्रायश्चित्तमिति लेखितपुस्तकपाठः ।

(२) कीर्त्तिकुलविनाशनमिति क्रीत-लेखितपुस्तकपाठः ।

(३) [ ] अयं श्लोकोऽधिकोऽत्र क्रीतपुस्तकेऽदृष्टः ।

(४) [ ] अयमंशः क्रीत पुस्तके नास्ति ।

(५) [ ] क्रीतपुस्तके अयं पाठस्तु अत्र नोपलब्धः ।

(६) वाराधिदैवत्यमिति क्रीतपुस्तकपाठः ।

(७) विधीयते इति क्रीत पुस्तकपाठः ।

रक्तवस्त्रं कुजे भानौ श्वेतं शुक्रे प्रदर्शितम् ।
शनैश्चरे तु नीलं स्यादेतद्दोषोपशान्तये ॥
दत्त्वा[४] शुद्धिमवाप्नोति अकृत्वा दोषमाप्नुयात् ।
क्षत्रियाणामप्येवम् ।

इति हेमाद्रौ दुष्टवारमरणे प्रायश्चित्तम् ।

---

(४) दद्यात् इति क्रीत-लेखितपुस्तक पाठः ।

## अथ षण्निमित्तमरणप्रायश्चित्तमाह ।

देवलः— ऊर्द्ध्वोच्छिष्टमधोच्छिष्टमन्तरामरणं तथा ।

कर्णमन्त्रेण राहित्यमस्नानमरणं तथा ॥

तथा पर्य्युषितञ्चैव षण्निमित्तमितीरितम् ।

एतैर्निमित्तैर्मरणे नरकं सम्प्रपद्यते ॥

मरीचिः—षण्निमित्तैर्द्विजोमृत्वा[1] त्रयेण द्वितयेन वा ।

[2]क्षिप्रं नरकमाप्नोति कर्त्तुरायुःक्षयो भवेत् ॥

कण्वः— द्विजो वै[3] षण्निमित्तैश्च सह मृत्वा तु दैवतः ।

त्रयेण द्वितयेनाऽपि सहितोयदि पूर्व्ववत् ॥

[4]क्षिप्रं नरकमाप्नोति तत्कर्त्तुरशुभं भवेत् ।

तद्दोषपरिहारार्थं प्राजापत्यं पृथक् चरेत् ॥

एकैकस्य निमित्तस्य प्रत्येकं प्राजापत्यकृच्छ्रं कृत्वा शुद्धिमाप्नोति ।

तदेवाह

जावालिः—एकैकस्य निमित्तस्य प्रत्येकं कृच्छ्रमीरितम् ।

कृत्वा शुद्धिमवाप्नोति कर्त्तुरायुर्व्विवर्द्धनम् ॥

इति हेमाद्रौ षण्निमित्तमरणप्रायश्चित्तम् ।

(१) योमृत्वा इति क्रीत-लेखितपुस्तकपाठः ।

(२) तदा इति क्रीत लेखितपुस्तकपाठः ।

(३) ग्र इति क्रीतपुस्तकपाठः ।

(४) तथा इति लेखितपुस्तकपाठः ।

## अथ शवोपरि (१)उच्छिष्टादिपतनप्रायश्चित्तमाह ।

देवलः—श्लेष्म-शृंखाणिकाऽश्रूणि रुदतां सम्पतन्ति हि ।

कुणपोऽशुद्धिमाप्नोति उच्छिष्टः कर्म्मकार्य्यमौ ॥

महाराजविजये—

पिपीलिका कृमिश्चैव उच्छिष्टं रोदनोद्भवम् ।

श्लेष्मशृङ्खाणिकाऽश्रूणि पतन्ति कुणपोपरि ॥

तदा शुचि(२)त्वमाप्नोति कर्त्ता नरकमश्नुते ।

गौतमः—

पिपीलिकाभिः कृमिभिः श्लेष्म-शृङ्खाणिका-श्रुभिः ।

कुणपोऽस्पृश्यतां याति कर्त्ता च कश्मलो भवेत् ॥

तद्दोषपरिहारार्थं स्पृष्टोच्छिष्टं स्वपाणिभिः ।

मार्ज्जयेन्नूतनैस्तोयैरापोहिष्ठादिमन्त्रितैः ॥

एतैः शुद्धिमवाप्नोति दाहयोग्यो भविष्यति(३) ।

क्षत्रियादीनामेवं स्त्रीणामपि ।

इति हेमाद्रौ शवोच्छिष्टादिपतनप्रायश्चित्तम् ।

(१) उच्छिष्टपतन इति क्रीत-लेखितपुस्तकपाठः ।

(२) अशुचित्वमवाप्नोति इति लेखितपुस्तकपाठः ।

(३) भवेत्तदा इति काशीपुस्तकपाठः ।

## अथ शवस्य शूद्रादिस्पर्शनप्रायश्चित्तमाह ।

देवलः— शूद्र-मार्ज्जार-काकाद्यैः स्पृष्टश्चेद्रजकादिभिः ।

रजस्वलाभिः स्त्रीभिश्च श्वभिः पतितकुण्डजैः[1] ॥

न शवस्य परोलोकस्तत्कर्त्ता पापभाग्भवेत् ।

मरीचिः—

रजस्वलाभिः स्त्रीभिर्वा श्वभिः पतित-कुण्डजैः ।

शूद्र-मार्ज्जार-काकाद्यैः स्पृष्टश्चेद्रजकादिभिः ॥

न शवस्य गतिर्वाऽस्ति कर्त्तुरायुःक्षयोभवेत् ।

तद्दोषपरिहारार्थं स्नापयित्वा शवं तदा ॥

नूतनेनैव वस्त्रेण पिधाय कुणपं तथा ।

[2]रजस्वलादिभिः स्पर्शे प्राजापत्यं समाचरेत् ॥

कायं शुना च शूद्रेण इति तेषां हिरण्यतः ।

कृत्वा शुद्धिमवाप्नोति पश्चाद् दाहादिकं चरेत् ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ [3]शवस्य शूद्रादिस्पर्शनप्रायश्चित्तम् ।

---

(१) कुण्डलैरिति लेखितपुस्तकपाठः ।

(२) रजस्वलाभिः स्पर्शे च इति लेखितपुस्तकपाठः ।

(३) शव स्पृष्टादि इति लेखितपुस्तकपाठः ।

## अथ त्रिपान्नक्षत्रमरणप्रायश्चित्तमाह ।

देवलः — वह्निभे दितिभे चैव नक्षत्रे भगदैवते ।

इन्द्राऽग्निभे वैश्वभे च उत्तराषाढएवच ॥

पूर्व्वभाद्रे तथा राजन् नक्षत्राणि महान्ति च ।

त्रिपदेष्वेषु [1]यन्मृत्युर्ग्रामेऽरिष्टं भवेत्तदा ॥

वारे त्रिपादिनक्षत्रे मृतिश्चेद् वाटिकाभयम् ।

तिथौ वारे त्रिपदभे मृतौ[2] गृहपतेर्भयम् ॥

तदाह—

गौतमः—"तिथ्युडुयोगे ग्रामे गृहपतेर्गृहनाशश्च त्रिपान्नक्षत्रे मृतौ[3] हिरण्यदान माचरेत्" ।

वारे त्रिपाङ्गे [4]मृत्यौ च हिरण्यं वस्त्रमेवच ।

तिथौ वारे त्रिपदभे [5]मृतिश्चेद्वाटिकाभयम् ।

भृगौ विशेषतो [6]वच्मि त्रिपुष्करसमोभृगुः ॥

[7]तत्रैव दुष्टनक्षत्रे तिथौ दुष्टमृति यदा[8] ।

तदा गृहपतेर्दोषः [9]मृत्यौ भाति महत्तरः ॥

---

(१) योमृत्वा इति क्रीतलेखितपुस्तकपाठः ।

(२) मृत्वा इति क्रीतलेखितपुस्तकपाठः ।

(३) मृत्वा इति क्रीतलेखितपुस्तकपाठः ।

(४) मृत्या इति क्रीतलेखितपुस्तकपाठः ।

(५) मृत्वाचेत् इति लेखितपुस्तकपाठः—मृत्वा गृहपतेर्भयमिति क्रीतपुस्तकपाठः ।

(६) वापि इति क्रीतपुस्तकपाठः ।

(७) स एव इति क्रीतलेखितपुस्तकपाठः ।

(८) यथा इति लेखितपुस्तकपाठः । (९) मृत्योरिति क्रीतपुस्तकपाठः ।

तद्दोषपरिहारार्थं गोत्रयं सम्यगाचरेत्।

अन्यान्तरे—

नक्षत्रे मरणे[1] स्वर्णं द्वयोर्योगे द्वयं चरेत्।
[ त्रयाणां योगमात्रे च गामेकां तत्र सञ्चरेत् ][2]
कृत्वैतद्दोषमुक्तः स्याद् अन्यथा हानिमादिशेत्॥
क्षत्रियादीनामेवं कन्यकास्त्रीमरणेष्वेवम्।

इति हेमाद्रौ त्रिपादृक्षत्रमरणप्रायश्चित्तम्।

---

(१) नक्षत्रं इति लेखितपुस्तकपाठः नक्षत्रेषु इति क्रीतपुस्तकपाठः।
(२) इदं श्लोकार्द्धं क्रीतपुस्तक एव दृष्टम्।

## अथाऽऽसंदीभञ्जनप्रायश्चित्तमाह ।

देवलः —

ग्रामश्मशानयोर्म्मध्ये यदाऽऽसंद्यवभञ्जनम् ।
ग्रामारिष्टं कर्त्तृहानि[1] र्भवत्येव हि सर्व्वदा ॥

याज्ञवल्क्यः —

गृहादारभ्य दहनपर्य्यन्तं यदि भज्यते[2] ।
कर्त्तृनाशो गृहपतेर्महदरिष्टसञ्ज्ञमा ॥

शालिहोत्रः —

[3]आमन्दीं यदि राजेन्द्र भञ्जयेत् खलु दैवतः ।
आदाहदशपर्य्यन्तं कर्त्तुर्दुःखं विनाशनम्[4] ॥
तद्दोषपरिहारार्थं प्रायश्चित्तं विशोधनम् ।
प्राजापत्यं तदा [5]कुर्य्यात् कर्त्ताऽऽत्ममलमोचने ॥
तदाऽसौ सुखमाप्नोति तस्य दोषः प्रणश्यति ।

सर्व्ववर्णसममिदम्[6] ।

इति हेमाद्रौ आमन्दीभञ्जनप्रायश्चित्तम् ।

---

(१) कर्त्तृहानिर्ग्रामारिष्टमिति क्रीत-लिखितपुस्तकपाठः ।
(२) भञ्जते इति क्रीत-लिखितपुस्तकपाठः ।
(३) आमन्दां इति लिखितपुस्तकपाठः ।
(४) दुःखविनाशनं इति लिखितपुस्तकपाठः ।
(५) कार्य्यमिति क्रीत लिखितपुस्तकपाठः ।
(६) मर्व्व इति क्रीत-लिखितपुस्तकपाठः ।

## अथ शवपतनप्रायश्चित्तमाह ।

देवलः—श्रामन्या:[1] शकटाद्वापि कुणपोभुवि यत् [2]पतेत् ।
[3]तदाऽरिष्टं गृहे भूयात् व्याधि तस्कर-राजभिः ॥

महाभारते—

ग्राम-श्मशानयोर्मध्ये कुणपोयदि दैवतः ।
श्रामन्देरनसोवेगात् भूमौ पतनमृच्छति[4] ॥
तत्कर्त्तुरतिवेगेन मृत्युर्हानिर्य्यशःक्षयः ।

गौतमः—

शकटादनसोवापि कुणपोयत्[5] पतेद्भुवि ।
श्मशान-ग्राममध्ये वा तत्कर्त्तुरतिवेगतः ॥
हानिर्मृत्युर्यशःखेदः सम्भवत्येव सर्व्वदा ।
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ॥
तत्कर्त्तुश्चभवेद् वृद्धिरन्यथाऽशुभमादिशेत् ।
कन्यका-बाल वनितयादीनामेवं वेदितव्यम् ।

इति हेमाद्रौ शवस्य भूपतनप्रायश्चित्तम् ।

---

१। आमन्दित: कटाद्वापि इति क्रीतपुस्तकपाठः ।
२ व पतेदिति लेखितपुस्तकपाठः ।
३ तस्यारिष्टमिति क्रीत-लेखितपुस्तकपाठः ।
४ धरान्तुभिच्छति इति क्रीत-लेखितपुस्तकपाठः ।
५ व पतेदिति लेखितपुस्तकपाठः ।

## अथाऽग्निपतनप्रायश्चित्तमाह ।

देवलः – श्मशान गृहयोर्मध्ये यदि वह्निः पतेद्भुवि ।
तत्प्रेतस्य गतिर्नास्ति कर्त्तुरायुर्विनश्यति ॥

गालवः—

ग्राम-श्मशानयोर्मध्ये पात्रं भित्त्वा पतत्यसौ ।
कर्त्तुरायुर्विनाशः स्यात् प्रेतो नरकमश्नुते ॥

गार्ग्यः–– श्मशान-गृहमध्ये च यदि वह्निः पतेद्भुवि ।
तदाकर्त्तुरभद्रं[1] स्यात् निर्ज्जीवो याति नारकम् ॥
तद्दोषोपशमायाऽलं तस्मिन् वह्नौ घृताहुतिः[2] ।
अग्निमीलेति मन्त्रेण अग्निमूर्द्धेति मन्त्रतः ॥
हुत्वाऽऽहुतिद्वयं तत्र तमग्निं न त्यजं[3] स्तदा ।
पुनः पात्रान्तरे न्यस्य[4] शेषं कर्म्म समापयेत् ॥
अन्यथा दोषमाप्नोति पूर्व्ववत्पापभाग्भवेत् ।

बाल कन्यका-क्षत्रियादीनामेवम् ।

इति हेमाद्रौ अग्निपतनप्रायश्चित्तम् ।

---

(१) अभद्रःस्यात् इति क्रीत-पुस्तकपाठः ।

(२) तस्मिन् वह्नुघृताहुतिः इति क्रीतपुस्तकपाठः ।

(३) नत्यजेत् इति क्रीतपुस्तकपाठः ।

(४) स्थाप्य इति क्रीत-लेखितपुस्तकपाठः ।

### अथ दहनयोग्यस्य [1]प्रोथने प्रायश्चित्तमाह ।

देवलः—बालिकां बालकं वापि दाहार्हं प्रोथयेद्भुवि[2] ।

[3]बालश्च याति नरकं तत्कर्त्ता बालघातकः ॥

मरीचिः—

दाहयोग्यं यदा बालं [4]प्रोथेदज्ञानतोद्विजः ।

बालः पिशाचतां याति तत्कर्त्ता भ्रूणहा भवेत् ॥

कात्यायनः—

बालं वा बालिकां वापि दाहार्हं निखनेद्भुवि[5] ।

महान्तं नरकं गत्वा भवेद्बालग्रहस्तदा ॥

विलादुद्धृत्य तं बालं प्रोक्षयेत् पञ्चगव्यतः ।

तत्तन्मन्त्रैर्जलैः पश्चाद् भूमिर्भूम्नाऽनुवाकतः ॥

तं बालमभिमन्त्र्याऽऽशु कृत्वा कृच्छ्रं विधानतः ।

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ दहनयोग्यस्य [6]प्रोथनप्रायश्चित्तम् ।

---

(१) खनने इति क्रीत-लेखितपुस्तकपाठः ।

(२) दाहयोग्यं खनेद्भुवि इति क्रीत-लेखितपुस्तकपाठः ।

(३) स बाल इति क्रीतपुस्तकपाठः ।

(४) खनेदिति क्रीत-लेखितपुस्तकपाठः ।

(५) दाहयोग्यं खनेद्भुवि इति क्रीतपुस्तकपाठः ।

(६) खनन इति क्रीत लेखितपुस्तकपाठः ।

## अथ खननयोग्यस्य दहनप्रायश्चित्तमाह।

देवलः— बालिकां बालकं वापि दाहयोग्यं खनेद्भुवि।
यो विप्रः खननयोग्यं द्विवर्षात् किञ्चिदूनकम्।
कर्त्ताऽसौ नरकं याति बालो याति पिशाचताम्॥

गौतमः—अज्ञानात् मुखजो बालं खननार्हं यदा दहेत्।
स बालो याति पैशाच्यं कर्त्ताऽसौ नारकी भवेत्॥

पराशरः—ऊनद्विवर्षं निखनेत् कन्यकां बालमेव वा।
अज्ञानाद्यदि वा मोहाद् भवेद्धर्म्मपराङ्मुखः॥
बालो याति महद्दुःखं कर्त्ता नरकमश्नुते।
तद्दोषपरिहारार्थं वह्नौ हुत्वाऽऽहुतित्रयम्॥
वह्निं प्रजापतिं सोमं व्याहृतीस्तदनन्तरम्।
हुत्वा तं शवमादाय खनेद् भूमौ प्रयत्नतः॥
तद्दोषपरिहारस्तु जायते नान्यथा भवेत्॥

क्षत्रियादीनामेवम्।

इति हैमाद्रौ खननयोग्यस्य दहनप्रायश्चित्तम्।

---

इदमर्द्धं कैश्चित्पुस्तके न दृश्यते।

इदमर्द्धं [illegible] पुस्तके न दृश्यते।

[illegible]

[illegible]

[illegible]

## अथ दहनयोग्यस्य दहनाभावप्रायश्चित्तमाह ।

देवलः—यो विप्रो मातरं तातं भ्रातरं भगिनीं तथा ।
स्नुषां दुहितरं भार्य्यां पुत्रीं वा पुत्रमेव वा ॥
प्रजावतीमात्मनश्च दाहयोग्यान् स्वबान्धवान् ।
लोभाद्वा नास्तिकाद्वापि वाक्याद्वा धर्म्मचारिणः ॥
अदग्ध्वैतान् कर्म्म कुर्य्यात्[1] हर्त्ता नरकमेति सः[2] ।
तेऽपि वै प्रेतभूतास्तु नैमुक्तास्तु यमालयात् ॥

मार्कण्डेयः—
यः पुमान् [3]दाहयोग्यान् स्वान् बान्धवान् दाहवर्ज्जितान्[4] ।
कृत्वा तेषां क्रियाः कुर्य्यात् नरकं न प्रपद्यते[5] ॥
पितरस्तेऽपि प्रेतास्तु यमलोके सहस्रशः ।
तद्दोषपरिहारार्थं अन्त्यष्टिं विशुद्धिदम् ॥
[6]प्राजापत्यत्रयं कृत्वा कर्त्ता शुद्धिमवाप्नुयात् ।
मृतास्तेऽपि परं यान्ति [7]अभिशुद्धिश्च जायते ॥

भगिन्यादीनामप्येवम् ।

इति हेमाद्रौ दहनयोग्यस्य दहनाभावप्रायश्चित्तम् ।

---

(१) कुर्व्वन् इति क्रोड-लिखितपुस्तकपाठः ।
(२) [illegible] इति क्रोड-लिखितपुस्तकपाठः ।
(३) [illegible]
(४) [illegible]
(५) [illegible]
(६) प्राजापत्यं [illegible] लिखितपुस्तकपाठः ।

## अथोत्तरीय-शिलापात्र-कर्तृ-द्रव्य-विपर्य्यय-प्रायश्चित्तमाह।

देवलः— (उत्तरीय शिलापात्र-कर्तृ द्रव्यविपर्य्यये।)

कृच्छ्रत्रयं तदा कृत्वा पुनः कर्म्म समाचरेत्॥

उत्तरीयं [1]चैतस्य पूर्व्वधारितवस्त्रखण्डं, शिला, दहनानन्तरं या संस्कारार्थं [2]गृहीता साशिला, ताम्र[3] पात्रं च प्रथमदिवसे चरुस्रपणार्थं सम्पाद्यते। न दशाहपर्य्यन्तं पचनं कर्त्तव्यम्। कर्त्ता मरणदिने अग्निकर्त्ता।

[असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्]

"प्रथमेऽहनि यः कर्त्ता स दशाहं समापयेत्।"

इति वचनात्, स्थानं पिण्डनिक्षेपणस्थानम्। द्रव्यं पिण्डद्रव्यं तण्डुलमुद्गादिकं तेषामेकैकस्य नाशे प्रत्येकं कृच्छ्रत्रयं कृत्वा तत्तत्कर्म्म पुनर्दहनदिनादारभ्य कुर्य्यात्। तदाह—

मार्कण्डेयः—उत्तरीय-शिलापात्र-कर्तृ-द्रव्यविपर्य्यये।

यदि दैवाद् भवेत्तेषां नाशो वर्षादिविद्रवैः[4]।

कृच्छ्रत्रयं तदा कृत्वा तत्तत्कर्म्म यथा क्रमम्।

() क्रीतपुस्तके नास्ति।

(१) ह्येतस्य इति लेखितपुस्तकपाठः।

(२) स्पृष्टोला इति क्रीत लेखितपुस्तकपाठः

(३) ताम्रेति लेखितपुस्तके नास्ति

() क्रीत-लेखितपुस्तकयोर्न दृश्यते।

(४) वर्षाति विद्रवैरिति क्रीत-काशीपुस्तकपाठः

दहनदिनादारभ्य इत्यर्थः। कर्त्ता ज्वरादिना चेत् पीड़ितः तदा अन्यः पूर्व्ववत् कृच्छ्रत्रयं कृत्वा दहनदिनादारभ्य शिलास्नान-मृदास्नानादिकं कुर्य्यात्।

गौतमः—

> असगोत्रः सगोत्रोवा यदि स्त्री यदि वा पुमान्।
> प्रथमेऽहनि यः कर्त्ता स दशाहं समापयेत्॥
> तदभावे पुनश्चान्यः स्नात्वा कृच्छ्रत्रयं चरेत्।
> तत्तत्कर्म्माणि सर्व्वाणि तानि कुर्य्याद्यथाक्रमम्॥
> अन्यथा दोषमाप्नोति प्रेतत्वान्न विमुच्यते।

क्षत्रियादीनामेवम्।

इति हेमाद्रौ उत्तरीयशिलापातादिविपर्य्ययप्रायश्चित्तम्।

---

## अथ पिण्डोपहतिप्रायश्चित्तमाह ।

देवलः —

श्व शृगाल-खरैः पिण्डःस्पृष्टोभिन्नः प्रमादतः ।
कर्त्तुरायुष्यनाशः स्यात् प्रेतत्वं [1]नाऽपसर्पति ।

गौतमः —

शृगाल रासभ श्वानैर्हत्तः पिण्डोभुवःस्थले ।
स्पृष्टोभिन्नस्तदा[2] राजन् कर्त्तुरायुष्यनाशनम् ॥
प्रेतस्तस्मिन्निराशः स्यात् काकस्पर्शादिना तथा[3] ।
दत्तपिण्डो भुवःस्थाने श्व-शृगाल-खरादिभिः ॥
स्पृष्टोभिन्नस्तदाकर्त्तुरायुष्यं लयमेष्यति ।
प्रेतस्तस्मिन्निराशः स्यात् काकस्पर्शादिभि[4]स्तथा ॥
भिन्नोविदलितः स्पृष्टः श्वादिभिर्भक्षितस्तथा ॥

तयोरेकत्र सम्भवे कर्त्तुर्हान्यादिकं योजनीयम् ।

तस्मात् प्रायश्चित्तमाह ।

जातूकर्ण्यः—

दलिते श्वादिभिः स्पृष्टे पिण्डदोषो महान् भवेत्[5] ।
तदा कर्त्तुरनायुष्यं प्रेतत्वं नाऽपयाति वै[6] ॥

---

(१) नोपसर्पति इति लेखितपुस्तकपाठः ।
(२) तथा इति क्रीतपुस्तकपाठः ।
(३) विना इति क्रीत-लेखितपुस्तकपाठः ।
(४) काकस्पर्शादि विना इति क्रीतपुस्तकपाठः ।
(५) अभूदिति क्रीत-लेखितपुस्तकपाठः ।
(६) नोपजिघ्रति इति लेखितपुस्तकपाठः नापसर्पति इति क्रीतपुस्तकपाठः ।

तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ।
पुनः स्नात्वा तदा कर्त्ता पिण्डं कुर्य्यात् यथाविधि ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ पिण्डोपहतिप्रायश्चित्तम् ।

---

## अथ सञ्चयनात् प्राक् प्रेतदहनाग्निनाशप्रायश्चित्तमाह ।

देवलः— प्रेताग्निश्च विवाहाग्निर्व्रताग्निर्जातकर्म्मणि ।

नष्टोहृतश्चोपहतःशान्तश्चेत्तत्र दोषभाक् ॥

मार्कण्डेयः—

प्रेताग्निर्जातकर्म्माग्निर्व्रताग्निश्च विवाहजः[1] ।

शान्तोनष्टश्चोपहतो हृतश्चेद्दोषभाजनम् ॥

नष्टः अपसरणेन[2] नानादिक्षु ततोज्ञातिभिर्गृहीतः, [3]उपहतिरन्याग्निमेलनं, शान्तो नष्टप्रायः । एतेषां चतुर्व्विधानां अग्नीनां मेलने[4] प्रायश्चित्तं ग्रन्थकारैः स्मृतिकर्त्तृभिश्च यद् दर्शितं वयं तदेव ब्रूमः ।

कूर्म्मपुराणे—तत्तद्भस्म समूह्याऽऽशु शन्नोदेवीत्यृचा जलैः ।

प्रोक्ष्य तत्रैव समिधं निधाय मनसा हरिम् ॥

स्मरन्नेतैश्च मन्त्रैश्च अभिमन्त्र्य च तां पुनः ।

अयन्तइति मन्त्रेण आजुह्वानेति मन्त्रतः ॥

उद्बुध्यस्वेति तां त्यक्त्वा लौकिकाग्नौ निधापयेत् ।

अत्रैव गौः प्रदातव्या श्रोत्रियाय कुटुम्बिने ॥

---

(१) विवाहत इति क्रीतपुस्तकपाठः ।

(२) अपसरणं नानादिक्षु इति लेखितपुस्तकपाठः । अपसरणेन दिक्षु इति क्रीतपुस्तकपाठः ।

(३) उपहतोन्याग्निमेलनं इति लेखितपुस्तकपाठः ।

(४) मेलनं इति लेखितपुस्तकपाठः ।

चतुष्पात्रप्रयोगेण स्रुचाऽऽज्यं प्रतिगृह्य च।

अथाश्च जुहुयात् पूर्व्वं पञ्चहोतारमादितः॥

ब्राह्मण एकहोता दश म[1]नस्वतीश्च जुहुयात्।

खण्डाश्च जुहुयात् पश्चात् महाव्याहृतयस्तथा।

अनाज्ञातत्रयं हुत्वा व्याहृतीः प्रणवैः सह॥

इमं मे वरुणस्तत्त्वा मितस्त्वं न इति च जुहुयात्।

कृत्वा विप्रस्ततः पश्चात् तत्तत् कर्म्म समाचरेत्।

प्रायश्चित्तविहीनं यत् तत्कर्म्म विफलं भवेत्॥

स्थालीपाकानन्तरं शेषहोमपर्य्यन्तं विवाहाग्नौ शान्ते, एतदेव प्रायश्चित्तम्। उपनयनादूर्द्धं चतुर्थहोमपर्य्यन्तं शान्तेऽप्येतदेव। शिशौ जाते तदा जातकर्म्म कृत्वा फलीकरणहोमाग्नौ दशरात्रमध्ये शान्ते च एतदेव। शवाग्नौ तु स्पष्टम्। क्षत्रियादीनामेवम्।

इति हेमाद्रौ अस्थिसञ्चयनात् पूर्व्वं प्रेतदहनाग्निनाश-प्रायश्चित्तम्।

---

1) मानस्वतीं इति क्रीतपुस्तकपाठः।

## अथ अस्थ्युपहतिप्रायश्चित्तमाह ।

देवलः—

अस्थिसञ्चयनात् पूर्व्वं अस्थीन्युपहतानि चेत् ।
खरैः शृगालैः शुनकैः कङ्क-गृध्रादिभिः कथम् ॥
प्रेतोऽत्र नरकं याति कर्त्तुरायुर्विशङ्कितम् ।

मार्कण्डेयः—अस्थीन्यस्पृश्यतां[1] यान्ति श्व शृगाल-खरादिभिः ।
प्रेतस्य यमलोकः स्यात् कर्त्तुरायुर्विपर्य्ययः ॥
तद्दोषपरिहारार्थं पञ्चगव्यैर्विशोधयेत् ।
पुरुषसूक्तेन तान्यद्भिः स्नापयेदस्थिसञ्चये[2] ॥
प्राजापत्यद्वयं कुर्य्याद् उभयोः शुद्धिहेतवे ।
ततः कर्म्म प्रकुर्व्वीत न तेन स हि दोषभाक्[3] ॥
अन्यथा न शुभं ज्ञेयं कर्त्तुः गृहनिवासिनः ।

क्षत्रियादीनामप्येवम् ।

इति हेमाद्रौ अस्थ्युपहतिप्रायश्चित्तम् ।

1. अस्पृश्यता इति क्वचित्पुस्तकपाठः ।
2. मञ्जुष इति क्वचित्पुस्तकपाठः ।
3. सहदोषभाक् इति क्वचित्पुस्तकपाठः ।

## अथ अस्थ्नां जलनिक्षेपाभावप्रायश्चित्तमाह ।

[1]देवलः--विप्रस्य कीकसानीह कर्त्ताऽम्भसि न निक्षिपेत् ।

प्रेतो वैतरणीं याति तत्पुत्रोऽ[2]शुभमाप्नुयात् ॥

गौतमः--मृतस्य यानि शल्यानि कर्त्ताऽम्भसि [3]नचेत् क्षिपेत् ।

तत्कर्त्ता नरकं याति प्रेतोयाति महानदीम् ॥

आहिताग्नेर्विना राजन् अन्येषां विधिगौरवात् ।

गालवः—दशाहमध्ये तत्कर्त्ता पक्षे वा शल्यसंग्रहे ।

जलनिक्षेपणात् पित्रोः पितरोलोकमाप्नुयुः ॥

कर्त्ता सुखमवाप्नोति अन्यथा [4]दोषवद्भवेत् ।

तेषां नष्टभुवःस्थाने कुलनाशोभवेत्तदा ॥

तद्दोषपरिहारार्थं कायकृच्छ्रं समाचरेत् ।

पश्चादस्थि समादाय निक्षिपेत् जलमध्यतः ॥

यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ।

तावद्युगसहस्राणि स्वर्गलोके महीयते ॥

भागीरथ्यभावे यत्रकुत्र समुद्रगनदीजले स्नापयेत् ।

अन्यथा दोषमाप्नुयात् । क्षत्रियादीनामेवम् ।

इति हेमाद्रौ अस्थ्नां जलनिक्षेपाभावप्रायश्चित्तम् ।

---

(१) लेखितपुस्तके नास्ति ।

(२) तत्पुत्रोभवमाप्नुयात् इति क्रौतपुस्तकपाठः ।

(३) न विक्षिपेत् इति क्रौत-लेखितपुस्तकपाठः ।

(४) [illegible]र्दिति क्रौतलेखितपुस्तकपाठः ।

